# अस्माकं महान् देशः
# सनातनी संस्कृतिः च ।

'एकात्मता'- एषा भारतीयसंस्कृते जीवनाडी । विभिन्नप्रदेशीयाः अपि वयं सगर्वं मन्यामहे— "भारतभूमिरेषा अस्मदीया" इति ।

पूर्वकाले भारतम् एतत् विभिन्नराज्येषु विभक्तम् आसीत् । तथापि एकराष्ट्रस्य भावना सर्वदा जागृता तिष्ठति स्म । सर्वेऽपि साभिमानं मन्यन्ते स्म— 'अहं भारतीयः' इति ।

एकात्मतापोषणदृष्ट्या एव प्राचीनाः तीर्थक्षेत्राणि कल्पितवन्तः, शक्तिपीठानि स्थापितवन्तः, ज्योतिर्लिङ्गाणिना पूजितवन्तः च । नद्यः पर्वताः इत्यादीन् पूज्यस्थाने प्रतिष्ठापितवन्तः ।

इदानीम् अपि अस्माकं मोक्षदायिनी गङ्गा यथा पूज्या तथैव पावनकारिण्यः सिन्धुकावेरीगोदानर्मदादयः अपि पूज्याः । काशी-हरिद्वार कादयः इव पुरीकन्याकुमारीरामेश्वरादयः अपि पूज्यतमाः । नगाधिराजः हिमालयः इव महेन्द्रमलयसह्यविन्ध्यादयः अपि प्रातःस्मरणीयाः ।

श्रीकृष्णस्य गोकुलाष्टमी, शिवस्य शिवरात्रिः, दुर्गायाः नवरात्रम्, गणेशस्य गणेशचतुर्थी, इत्यादीन् उत्सवान् समग्रे भारते सर्वे आचरन्ति एव । सर्वान् देवान् तारतम्यभावं विना समानया पूज्यभावनया पश्यामः वयम् ।

एवं भारतीयानाम् अस्माकम् आचारे व्यवहारे सम्प्रदाये च एकात्मताभावः स्फुटं प्रतीयते ।

यावत् एषः एकात्मताभावः अस्मासु जागर्ति तावत् वयम् अजेयाः । सहोदराः ! आगच्छन्तु । वयं तथा संघटिताः भवेम यथा कापि दुष्टशक्तिः अस्मान् विघटयितुं समर्था न स्यात् ।



# चन्दमामा

नवेम्बर्– १९८४

*

अ न्त र ङ्ग म्


| | | | | | |
|---|---|---|---|---|---|
| चन्दमामा प्रजल्पति | .... | ६ | कुशाग्रमतिः | .... | ३९ |
| शम्भुनाथस्य कथाः | .... | ७ | पिशाचः देवता च | .... | ४३ |
| त्रयः मान्त्रिकाः | .... | ११ | वाणिज्यरहस्यम् | .... | ५० |
| स्वावलम्बनम् | .... | १९ | विष्णुकथा | .... | ५१ |
| अङ्गरक्षकः | .... | २६ | सेवकपरीक्षा | .... | ५९ |
| मूलकारणम् | .... | २७ | दिव्यौषधम् | .... | ६१ |
| वक्रबुद्धिः | .... | २९ | चित्रशीर्षिका स्पर्धा | .... | ६४ |
| तात्याटोपे कुवरसिंहः च | .... | ३५ | | | |


*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'

सञ्चालकः 'नागिरेड्डी'

संस्कृतस्य वर्तमानदुरवस्थायाः मूलं कारणं– संस्कृतं गृहेषु नास्ति इत्येव । पूर्वकाले गृहेषु सर्वे सदस्याः संस्कृतेन व्यवहारं कुर्वन्तः आसन् । अन्यान्यकारणैः एषा परम्परा लुप्ता । कालान्तरे अदृश्यतां गता च । तदारभ्य संस्कृतस्य परिस्थितिः शोचनीया एव वर्तते ।

शालासु संस्कृतं, शास्त्रगोष्ठ्यः सरलपरीक्षाः, सम्मेलनम् इत्यादयः तु भाषाप्रचारे साधनानि । निरन्तरसम्भाषणं, संस्कृतविषये विद्यमानानाम् आक्षेपाणां, सम्भाव्यमानस्य ह्रासस्य च निवारणं कुर्यात् । किन्तु संस्कृतस्य पुनरुज्जीवनं, वास्तविकी प्रगतिः च संस्कृतगृहेण एव ।

तदा बाह्यप्रोत्साहे लुप्ते सति अपि भाषा स्वयं वर्धिष्यते ।

सम्पुटः– १ नवम्बर्- ८४ सञ्चिका– ८

प्रतिकृतिमूल्यम् रू. २- * वार्षिकं ग्राहकशुल्कम् रू. २४-



## चन्दमामा प्रजल्पति



### पक्षयुक्ता: नौका:।

अमेरिकादेशे निस्कोन्सिन् विश्वविद्यालयस्य विज्ञानिनः पक्षयुक्ताम् एकां नौकां निर्मितवन्तः। एषा नौका जले पक्षौ चालयन्ती मीनः इव गच्छति।

### ध्वनिपरीक्षया रोगज्ञानम्।

"नाडीं परीक्ष्य रोगाः ज्ञातुं शक्यन्ते" इति तु सामान्यम् इदानीं सोवियत् देशस्य विज्ञानिनः अन्विष्टवन्तः यत्– "कस्यचित् ध्वनेः अध्ययनेन अपि आरोग्यं ज्ञातुम् शक्यते" इति।





### 'वीडियो' क्रीडया दुष्परिणामः।

वीडियोक्रीडाभिः भयङ्कराः दुष्परिणामाः भवितुं शक्यन्ते। एतया क्रीडया अपस्मारः, घातकाः मानसिकरोगाः इत्यादीनां सम्भाव्यता विशेषतः अस्ति। बहुविध-संशोधनैः वैज्ञानिकाः एतं निष्कर्षं प्राप्तवन्तः।

### भवन्तः जानन्ति वा?

१. भारतस्य अत्युन्नतः जलपातः कः?

२. हिमालयपर्वतेषु स्थितस्य भारतीय- तीर्थस्थानस्य नाम किम्?

३. अहमदाबादसमीपे प्रवहन्ती नदी का?

४. भारते क्षेत्रफलेन विशालं राज्यं किम्?

५. भारते 'विक्टोरिया' प्रदर्शनशाला कुत्र अस्ति?

(उत्तराणि ६४तमे पृष्ठे)



# शम्भुनाथस्य कथा

कथाकथने शम्भुनाथस्य महान् उत्साहः। 'आगच्छतु, कथां श्रृणोतु' इति सः पौत्रं सदा पीडयति स्म। पौत्रस्य शिवरामस्य तु क्रीडायाम् अभिरुचिः। अतः शम्भुनाथः शिवरामं तर्जयति स्म- "सर्वदा किम् एतत् क्रीडनम् ?" इति। तथापि शिवरामः कथञ्चित् गृहात् निर्गत्य सायम् एव गृहं प्रत्यागच्छति स्म।

कदाचित् शम्भुनाथः पौत्रम् अनुरोधपूर्वकम् उपवेशयति स्म, कथां कथयति स्म च। तथापि एषः यदा कथाकथनव्यग्रः भवति तदा एव शिवरामः उत्थाय पलायते स्म।

कथासु रुचिम् उत्पादयितुं शम्भुनाथः बहुधा प्रयत्नं करोति स्म। स्वसमीपे मिष्टभक्ष्याणि, लड्डुकानि इत्यादीनि स्थापयति स्म। तथापि कथानामश्रवणेन एव शिवरामः धावति स्म।

"शिवरामः किमर्थं कथाः श्रोतुं न इच्छति ? अत्र किं कारणम् स्यात् ?" इति शम्भुनाथः बहुधा चिन्तितवान्। अतः सः स्वपत्नीं पुत्रं स्नुषां च आहूय पृष्टवान्- "मम कथायाः श्रवणे भवन्तः नीरसताम् अनुभवन्तः सन्ति वा ?" इति।

ज्येष्ठानां तु कथाश्रवणे न तथा आसक्तिः भवति किल ! तथापि ते शम्भुनाथम् अप्रसन्नं कर्तुम् अनिच्छन्तः वदन्ति स्म- "भवतः कथाः बहु रोचकाः भवन्ति। कथां श्रोतुम् अस्माकम् अपि महती इच्छा। किन्तु दुष्टः शिवरामः किमर्थं कथाः श्रोतुं न इच्छति इति न जानीमः वयम्।"

तदा शम्भुनाथः अनुरोधपूर्वकम् उक्तवान्- "तर्हि भवन्तः एव कथां श्रृण्वन्तु। भवतां कार्येषु विघ्नः यथा न भवेत् तथा अहं कथां श्रावयामि" इति।

एतदनन्तरं सः वर्तिकानिर्माणसमये पत्नीं कथां श्रावयति। यदा स्नुषा पाककार्यं करोति



तदा तत्र गत्वा सः कथां वदति। यदा पुत्रः वाटिकायां जलसेचनं करोति तदा तत्र गत्वा कथां वदति।

वस्तुतः ज्येष्ठाः अपि शम्भुनाथस्य कथां श्रोतुम् न इच्छन्ति स्म। अतः अस्याः आपदः मोक्षं प्राप्तुं ते शिवरामं कथञ्चित् आनीय शम्भुनाथस्य वशे स्थापयन्ति। तदा शम्भुनाथः शिवरामं उद्दिश्य कथां कथयितुम् आरम्भं करोति।

एवम् एव बहूनि दिनानि अतीतानि। अन्ते शिवरामः शम्भुनाथः च एकं सन्धिनियमम् अङ्गीकृतवन्तौ- "शिवरामेन प्रतिदिनं पितामहमुखतः एका कथा श्रोतव्या। अनन्तरं शम्भुनाथेन शिवरामस्य क्रीडनार्थम् अवकाशः दातव्यः" इति।

शम्भुनाथः यद्यपि एतं नियमम् अङ्गीकृतवान्, तथापि सः स्वबुद्धिमत्तया शिवरामं वञ्चयति स्म। कदाचित् सः तादृशीं दीर्घकथां श्रावयति, यस्याः अन्तः एव न भवति। तदा शिवरामस्य नेत्रयोः अश्रूणि आगच्छन्ति स्म।

कदाचित् शम्भुनाथः पञ्चषाः कथाः मेलयित्वा दीर्घरूपेण कथां विरचयति। एवं शिवरामः क्रीडनार्थम् अवकाशम् एव न प्राप्नोति स्म। 'समाप्तिपर्यन्तं कथां शृणोमि' इति पूर्वं तेन एव अङ्गीकृतम् आसीत् किल ?

तेषु एव दिनेषु तं ग्रामम् एकः बालकः इदम्प्रथमतया आगतवान्। तस्य बालकस्य, शिवरामस्य च मध्ये मैत्री समुत्पन्ना।

एकदा नवीनः बालकः शिवरामं पृष्टवान्— "किमर्थं भवान् प्रतिदिनं विलम्बेन आगच्छति ? यदि पूर्वम् एव आगच्छति, तर्हि अधिकं क्रीडितुं शक्यते किल ?" इति।

तदा शिवरामः पितामहस्य कथाकथनप्रसङ्गं समग्रं निवेदितवान्।

बालकः उत्साहेन पृष्टवान्- "भवतः पितामहः कथां श्रावयति वा ? मम तु कथाश्रवणे महती आसक्तिः" इति।

"तर्हि भवान् मम पितामहस्य सकाशात् कथां शृणोतु। अहम् अन्येन केनचित् बालकेन सह क्रीडामि" इति उक्तवान् शिवरामः।

"युक्ता आलोचना एषा । मम गृहे कोऽपि मां कथां न श्रावयति । इदानीं कथां श्रोतुम् अवकाशः प्राप्तः इत्येतत् मम भाग्यम्" इति उक्तवान् सः बालकः ।

अनन्तरदिने शिवरामः नवीनं बालकं पिता-महसमीपं नीत्वा उक्तवान्– "तात ! एषः मम स्नेहितः । कथाः श्रोतुम् एतस्य महान् उत्साहः ।"

शम्भुनाथः बहु सन्तुष्टः । सः शिवरामाय क्रिडितुम् अनुमतिं दत्त्वा नवीनं बालकम् उप-वेश्य कथां वक्तुम् आरब्धवान् ।

तस्यां कथायां नायकः राजकुमारः । नायिका राजकुमारी । कश्चित् मान्त्रिकः राजकुमारीं अपहरति । राजकुमारीम् आनेतुम् इच्छन् राज-कुमारः बहुकालपर्यन्तं तपः आचरति । अद्भुत-विद्यां सम्पादयति । अन्ते मान्त्रिकं मारयित्वा राजकुमारीं बन्धनात् मोचयति । तयोः विवाहः भवति ।

एतां कथां श्रुत्वा बालकः शम्भुनाथं पृष्टवान्- "एतदनन्तरं अन्यदेशेषु कश्चित् मान्त्रिकः राजकुमारीं न अपहृतवान् वा ?"

"अपहरतु नाम, तेन अस्माकं का हानिः?" इति हसन् पृष्टवान् शम्भुनाथः ।

बालकः उक्तवान्– "अहं एतदर्थं पृष्टवान् यत् अस्माकं राजकुमारः सज्जनः परोपकारी च । यदि अन्यः कष्टे अस्ति, तर्हि एषः



अवश्यं तत्र गत्वा साहाय्यं करिष्यति । एवं कुत्रापि सः गतवान् वा ?" इति ।

एतं प्रश्नं श्रुत्वा शम्भुनाथः सन्तुष्टः । "भवान् योग्यं प्रश्नं पृष्टवान्" इति वदन् सः अन्यां कथाम् आरब्धवान् । "तेषु दिनेषु मिथिलाराज्ये एकः दुष्टः मान्त्रिकः आसीत् । सः शतं राजकुमारान् एकोत्तरशतं राजकुमारीः च देव्यै बलिरूपेण दातुं निश्चितवान्" इत्येवं कथायाः आरम्भं कृत्वा, "एतं मान्त्रिकम् अपि पूर्वोक्तः राजकुमारः एव मारितवान् । बहुकालानन्तरं सः गृहं प्रत्यागतवान्" इति कथां समापितवान् ।

तदा सः बालकः पुनः पृष्टवान्- "तात ! तावद्दिनपर्यन्तं राजकुमारी तूष्णीम् एव स्थितवती

वा ? प्राय: सा राज्यभारं मन्त्रिणां हस्ते दत्त्वा पत्यु: अन्वेषणार्थं गतवती स्यात् किल?'' इति।

''आम्, आम्'' इति वदन् शम्भुनाथ: पुन: कथां वक्तुम् आरब्धवान्। कथाया: अन्त्ये बालकस्य मनसि काऽपि समस्या उद्भवति एव। तत्समाधानार्थं वृद्ध: पुन: कथां कथयति। एवं समाप्तिरेव न भवति !

एवं कथाम् उक्त्वा उक्त्वा शम्भुनाथ: श्रान्त:। अत: स: उक्तवान्- ''अवशिष्टा: कथा: श्व: कथयिष्यामि'' इति।

तदा बालक: उक्तवान्- ''श्व: पर्यन्तं मया प्रतीक्षा करणीया वा ! तत् न शक्यते, तात ! इदानीम् एव कथयतु'' इति।

शम्भुनाथ: दीर्घं निश्वसन् उक्तवान् ''बालक ! अन्त: गत्वा जलम् आनयतु। प्रथमम् अहं मम पिपासां निवारयामि। पुन: कथां कथयामि'' इति।

बालक: जलम् आनेतुं गृहस्य अन्त: गतवान्। ''एष: एव युक्त: समय:'' इति चिन्तयन् वृद्ध: गृहत: निर्गतवान्, धावितुम् आरब्धवान् च। कश्चित् मार्गे धावनकारणं पृच्छति चेत् वृद्ध: वदति स्म-''अहं मम पौत्रम् अन्विष्यन् अस्मि'' इति।

शिवराम: एतं विषयं ज्ञातवान्। 'पितामह: मिलित: चेत् कष्टम्' इति चिन्तयन् शिवराम: अपि धावितवान्। अन्ते कश्चित् शिवरामं गृहीत्वा शम्भुनाथस्य वशे समर्पितवान्।

दीर्घं निश्वसन् शम्भुनाथ: उक्तवान्- ''पुत्र शिवराम ! भीति: मास्तु। अहम् इदानीं भवन्तं कथां न श्रावयामि। अद्य भवान् यं बालकं गृहम् आनीतवान् स: इत:परम् अस्माकं गृहं यथा न आगच्छेत् तथा करोतु। एवं चेत् पुन: कदापि कथां श्रावयितुं भवन्तं न आह्वयामि'' इति।

एतेन शिवराम: सन्तुष्ट:। स: पितामहस्य वचनम् अङ्गीकृतवान्।

एतदनन्तरं शम्भुनाथ: कमपि उद्दिश्य कथां न उक्तवान्।






[ हसनगोरिः पिङ्गलेन सह दुर्गं प्राप्तवान् । द्वारम् उद्घाटयितुं तैः प्रयत्नः कृतः । तदानीं मरुभूमिचोरैः स्थापितं विस्फोटकं स्फुटितम् । तेन केचन व्रणिताः, केचन मृताः च । अनन्तरं भैरवपक्षीयैः सह भीकरयुद्धं प्रवृत्तम् । तत्र अकस्मात् पद्मपादः दृष्टः । ]

'पद्मपादस्य पुनर्मिलनं भवेत्' इति पिङ्गलः कदापि न चिन्तितवान् आसीत् । अवन्तीनगरतः सहस्रयोजनदूरे कुत्रापि मरुभूमौ पर्वतमध्ये मिलनं भवति इति कः वा जानाति स्म ?

पिङ्गलस्य मनसि कश्चन संशयः समुत्पन्नः- "एषः पद्मपादः एव वा ? अथवा पद्मपादवेषेण आगतः कश्चित् वञ्चकः स्यात् वा ?" इति । अतः सः हसनगोरिं अर्थगर्भया दृष्ट्या दृष्टवान् । हसनस्य मुखे अपि संशयः दृश्यते स्म । सः पिङ्गलं समीपे आकृष्य तस्य कर्णे उक्तवान्- "पिङ्गल ! एषः पद्मपादः कः ? भैरवपक्षीयः कोऽपि न स्यात् किल ?" इति ।

अकस्मात् आगतेन पद्मपादस्य प्रश्नेन पिङ्गलः किञ्चित् सम्भ्रन्तः इव । तस्य स्थितिं दृष्ट्वा मन्दहासं प्रकटयत् पद्मपादः उक्तवान्— "पिङ्गल ! किं, मम विषये भवतः संशयः उत्पन्नः वा ?"

"किम् उत्तरं दातव्यम् ?" इति पिङ्गलः



न ज्ञातवान् । सः मौनेन तिष्ठन्, हसनस्य मुखं दृष्टवान् । हसनः परिस्थितिं किञ्चित् अनुकूलां कर्तुम् इच्छन्- ''महाशय ! भवान् कः इति अहं स्पष्टं न जानामि । किन्तु . . .'' इति वदन् वाक्यम् अर्धे स्थागितवान् । हसनगोरिवचनं श्रुत्वा पद्मपादः उच्चैः हसितवान् ।

अनन्तरं पिङ्गलस्य समीपं गत्वा तस्य स्कन्धस्य उपरि हस्तं स्थापयन् सः उक्तवान्- ''पिङ्गल ! मां पर्वतेषु निलीनं चोरनायकं न भावयन्ति भवन्तः- इति अहं चिन्तयामि । अवकाशे प्राप्ते मदीयं समग्रं वृत्तान्तं निवेदयिष्यामि । भवतः साहाय्येन अहं मम जीवनस्य लक्ष्यं साधितवान् । एतद्विषये अहं तृप्तः ।

वस्तुतः जीवनम् एव एकं नाटकम् । सूत्रधारस्य भगवतः इच्छानुसारं वयं अभिनयं कुर्मः । जीवने सर्वे साफल्यं प्राप्नुवन्ति इत्यपि वक्तुं न शक्यते । एतद्दृष्ट्या वयं भाग्यवन्तः । मरुभूमौ मां दृष्ट्वा भवान् चकितः किल ? मद्विषये संशयः अपि उत्पन्नः भवेत् एव'' इति ।

''न, पद्मपाद ! एवं किमपि नास्ति'' इति पद्मपादं वदन् पिङ्गलः हसनं प्रदर्शितवान्- ''एषः राजपक्षीयः, उष्ट्रदलनायकः हसनगोरिः। भैरवनाथनामकं मरुभूमिचोरम् अन्विष्यन् एषः मरुभूमौ सञ्चारं कुर्वन् अस्ति ।''

एतत् श्रुत्वा पद्मपादः हसनगोरिम् उक्तवान्- ''महाशय ! भवान् मरुभूमिराजस्य अधिकारी चेत् भवता इदानीम् एकं कार्यं त्वरया करणीयम् । पुरतः दृश्यमानासु गुहासु केचन वणिजः बन्धने सन्ति । एते इदानीम् एव विमोचनीयाः । दुष्टः भैरवनाथः एतान् लुण्ठयित्वा बद्ध्वा च गुहासु क्षिप्तवान् । असहायानाम् एतेषां धनादिकं तु गतम् एव । प्राणाः अपि अपाये सन्ति'' इति ।

इदानीम् अपि हसनगोरिः पद्मपादविषये संशयितः एव । एतत् ज्ञात्वा पिङ्गलः उक्तवान्- ''हसनमहोदय ! पद्मपादः मया सह भवतु । एतेन सह अहं वार्तालापं कर्तुम् इच्छामि । यदि एषः एव भैरवः, तर्हि अहम् एतं बन्धयित्वा भवतः वशे अर्पयामि । अतः भवान् निश्शङ्कं गच्छतु'' इति ।

पिङ्गलस्य वचनेन हसनस्य मनसि विद्य-

मानः संशयः निर्गतः । अनन्तरं हसनः कैश्चित् सैनिकैः सह पद्मपादेन प्रदर्शिताम् दिशम् उद्दिश्य गतवान् ।

"पिङ्गल ! अपरिचितायाम् अस्यां मरुभूमौ भवतः मिलनं तु आनिरीक्षितम् व मम । अवन्तीनगरं त्यक्त्वा कथम् एतावद् दूरम् आगतवान् ?" इति पृष्टवान् पद्मपादः ।

"पद्मपाद ! मम कथा तु विलक्षणा। भवता दत्तः मन्त्रस्यूतः धनसम्पत्तिः इत्यादयः सर्वे अपि नष्टाः । अत्र मूलकारणं मदीयौ दुष्ट-सहोदरौ । भवतः गृहतः प्रस्थितः अहं यत् यत् कष्टम् अनुभूतवान् तत्सर्वं वक्तुं महान् समयः अपेक्षितः । तत्सर्वं कालान्तरे कथयिष्यामि ।




भवान् किमर्थम् अत्र आगतः ? कश्चित् मान्त्रिकं जेतुम् आगतः चेत् तत्कार्ये मया अवश्यं सहकारः दीयते । भवतः कृते साहाय्यं मम प्रथमकर्तव्यम् इति अहं भावयामि" इति उक्तवान् पिङ्गलः ।

पिङ्गलस्य वचनेन पद्मपादः बहु सन्तुष्टः । किन्तु पिङ्गलेन प्राप्तां दुरवस्थां श्रुत्वा बहु खिन्नः अपि । मन्त्रस्यूतः धनसम्पत्तिः इत्यादिकं सर्वम् अपि नष्टम् इति ज्ञात्वा सः व्यथाम् अनुभूतवान् । भल्लूकपर्वते महामायं जेतुं पिङ्गलेन यत् साहाय्यं कृतम् आसीत् तत् कथं वा विस्मरेत् पद्मपादः ?

"पिङ्गल ! अहम् अत्र न कश्चिदपि मान्त्रिकं जेतुम् आगतवान् । महामायगुहातः मया याः शक्तयः प्राप्ताः, ताः यावत् मम समीपे तिष्ठन्ति तावत् मम कुतः अपि भीतिः नास्ति ।

लक्ष्यप्राप्तेः अनन्तरं मानवः सामान्यतः अन्तर्मुखः भविष्यति । केचन विलासे मग्नाः भवेयुः नाम । वस्तुतः ये विलासे मग्नाः भवन्ति ते वास्तविकं सुखं प्राप्तुं न शक्नुवन्ति । अतः एव अहं वास्तविकं सुखम् आत्मसन्तोषं च प्राप्तुम् देशाटनार्थं प्रस्थितः । तत्र तत्र तीर्थक्षेत्राणि पश्यन् देवदर्शनं कुर्वन् सञ्चारं कृतवान् । इदानीं तु सामान्यस्य यात्रिकस्य वेषं धृत्वा वणिग्भिः सह अटन् एतत्प्रदेशम् आगतवान् । अद्य सायङ्काले एव लुण्टाकानाम्



शक्तयः केनापि कारणेन नष्टाः तु न किल? तत्रापि महामायतः वशीकृतानि वस्तूनि भवतः समीपे एव सन्ति किल?" इति।

पिङ्गलस्य वचनं श्रुत्वा मन्दहासं प्रकटयन् पद्मपादः उक्तवान्– "पिङ्गलः! अहं यदा वणिक्समूहेन सह प्रस्थितः तदा "अहम् एकः सामान्यः यात्रिकः" इति मम परिचयम् उक्तवान् आसम्। अहं मां मान्त्रिकं वदेयं तर्हि ते स्वैः सह मां न नयन्ति स्म। अतः एव तान् लुण्टाकेषु पीडयत्सु, अहं आत्मानं गोपयितुम् इच्छन् मन्त्रतन्त्रप्रयोगं न कृतवान्। शिलासु निलीय स्थितवान् च। यद्यपि तस्मिन् समये मम मनसि व्यथा उद्भवति स्म। तथापि अहं यथा-कथाञ्चित् मनः निगृह्य तूष्णीं स्थितवान्।"

एकं दलम् अस्माकम् उपरि आक्रमणम् अकरोत्। धनकनकादीनि वशीकृत्य, वणिजः सर्वे पुरतः दृश्यमानायां गुहायां स्थापिताः तैः। तेषु केचन अवन्तीनगरीयाः अपि सन्ति। प्रायः भवतः परिचितः अपि कश्चित् स्यात्" इति।

तदा आश्चर्यं प्रकटययन् पिङ्गलः उक्तवान्- "पद्मपाद! भवान् तु महामान्त्रिकः। यदा दुष्टाः लुण्टाकाः वणिजाम् उपरि आक्रमणं कृतवन्तः तदा भवान् किमर्थं तूष्णीं स्थितवान्? भवान् तु तान् सर्वान् एकस्मिन् एव क्षणे पराजेतुं शक्नोति स्म। तान् मारयितुम् अपि शक्नोति स्म किल? भवनः वशे विद्यमानाः

"पद्मपाद! भवतः व्यवहारः विचित्रः इव भाति। भवतः समीपे अद्भुतशक्तिशालि अङ्गुलीयकम्, खड्गः इत्यादयः सन्ति एव। एतेषु यस्य कस्यापि एकस्य साहाय्येन भवान् सर्वाणि तीर्थाणि गृहे उपविश्य एव द्रष्टुं शक्नोति स्म। एवं स्थिते, सामान्ययात्रिकः भूत्वा अन्यवाणिग्भिः सह अटता किमर्थं कष्टम् अनुभोक्तव्यम् आसीत्? विना प्रयत्नेन इष्टं साधयितुं शक्ये सति, किमर्थं वा एतादृशः प्रयासः? वृथा भवान् शारीरिकां मानसिकीं च पीडाम् अनुभूतवान्। मध्ये मध्ये एतादृश्यः पीडाः अपि पुनः आगच्छन्ति! अतः

भवतः प्रयासः केन उद्देशेन, इति तु मया न ज्ञातम् एव। कीदृशम् एतत् भवतः विलक्षणं वैराग्यम्!" इति उक्तवान् पिङ्गलः।

'रे पिङ्गलः! इदानीम् अपि भवान् मां लुण्टाकनायकं भैरवनाथम् एव चिन्तयन् अस्ति इति भाति' इति वदन् पद्मपादः मन्दहासं प्रकटितवान्। पुनः उक्तवान् च- "सर्वदेशेषु भ्रमणं कृत्वा पुण्यतीर्थानि सेवितानि चेत् एव पुण्यफलानि लभ्यन्ते। अतः मया सामान्य-यात्रिकेण भूत्वा भ्रमणं कृतम्। अद्भुतशक्ति-साहाय्येन प्रवासं करोमि चेत्, अथवा गृहे एव उपविश्य सर्वाणि तीर्थाणि पश्यामि चेत् किं वा प्रयोजनम्? पुण्यफलं तु न लभ्यते एव। प्रपञ्चे जाताः वयं सर्वे समानाः इति भावना सर्वदा भवेत्। अहम् एकः उत्तमः इति भावना यदा उत्पद्यते तदा अधःपतनं निश्चितम्। एषा नीतिः भवता अपि ज्ञातव्या, सर्वदा अनुसरणीया च।"

तयोः वार्तालापः एवम् एव प्रचलन् आसीत्। तदा हसनगोरिसैनिकानां कोलाहलः, वणिजां करुणक्रन्दनं च श्रुतम्। क्रमशः वर्धमानः एषः ध्वनिः सर्वत्र प्रतिध्वनितः। पिङ्गलः पद्मपादः च वार्तालापं स्थगयित्वा तस्यां दिशिः स्वदृष्टिं प्रसारितवन्तौ।

तस्मिन् समये एकः सैनिकः धावन् आगतवान्। पिङ्गलसमीपम् आगत्य सः



उक्तवान्- "भैरवनाथस्य अन्वेषणे हसनः भवतोः साहाय्यम् इच्छति" इति।

पिङ्गलः दैन्यं प्रकटयन् पद्मपादम् उक्तवान्- "पद्मपाद! अस्यां मरुभूमौ अन्नपानीयैः विना म्रियमाणं माम् एषः हसनः रक्षितवान्। एतादृशस्य साहाय्यं न करोमि चेत् अहं दोषी भवेयम्।

अस्मिन् अन्धकारे मरुभूमिचोराणां ग्रहणं मनुष्यमात्रेण न शक्यम्। एते मरुभूमिचोराः, तेषां नायकः भैरवनाथः च निर्दयाः। समीपस्थे एकस्मिन् दुर्गे विद्यमानान् शताधिकान् सैनिकान् मारयित्वा, अस्मान् अपि नाशयितुम् ते एकं कुतन्त्रं कृतवन्तः आसन्। एतादृशानां

बन्धनार्थं भवान् यदि अद्भुतशक्तीनां प्रयोगं करोति तर्हि वयं सर्वे उपकृताः भवेम। एनेन अस्मिन् प्रदेशे सञ्चरन्तः यात्रिकाः वणिजः च चोरभीतितः मुक्ताः भविष्यन्ति। भवतः उपकारं ते कदापि न विस्मरिष्यन्ति। एतस्य राज्यस्य महाराजः अपि निश्चयेन सन्तुष्टः भविष्यति।"

"पिङ्गल! भवदीयां प्रार्थनां कथं वा निराकरोमि? किन्तु एका एव आपत्तिः यत्- वणिजः सर्वे "अहं मान्त्रिकः" इति विषयं ज्ञास्यन्ति। अनन्तरम् अहं तैः सह स्थातुं अशक्तः भविष्यामि। तथापि चिन्ता मास्तु। तीर्थक्षेत्राणां दर्शनार्थं बहवः मार्गाः सन्ति" इति उक्त्वा पद्मपादः एकां शिलां हस्तेन स्वीकृतवान्। छुरिकया तां शिलां खण्डशः कर्तुम् आरब्धवान्।

पद्मपादस्य एतां चेष्टां दृष्ट्वा पिङ्गलः आश्चर्यचकितः। सः पद्मपादस्य स्कन्धं कम्पयन् उक्तवान्- "पद्मपाद! भवान् किं कुर्वन् अस्ति? मरुभूमिचोराः त्वरितगत्या पलायमानाः सन्ति। भवान् तु शिलाछेदनं करोति! कृपया चोराणां ग्रहणे कमपि उपायं चिन्तयतु।"

पद्मपादः मन्दहासं प्रकटयन् शिलाखण्डान् हस्ते गृहीत्वा पिङ्गलाय प्रदर्शयन् उक्तवान्- "अस्मिन् अन्धकारे तेषां चोराणां ग्रहणं मानवमात्रेण न शक्यम् इति भवता एव उक्तम्। एतादृशपरिस्थितौ मया मन्त्रस्य तन्त्रस्य वा साहाय्यं स्वीकरणीयम् एव किल! चोराः यथा अस्माकं समीपम् आगच्छेयुः तथा कर्तुम् अहं



वृकानां व्याघ्राणां च सृष्टिं कुर्वन् अस्मि । ते तु रात्रौ अपि द्रष्टुं शक्नुवन्ति ! अत्र पश्यतु । हस्ते ये बृहत्खण्डाः सन्ति ते व्याघ्राः । लघुखण्डाः ये सन्ति ते वृकाः । मम मन्त्रप्रभावेण एते एव शिलाखण्डाः वृकव्याघ्ररूपेण सजीवाः भवन्ति । निमेषमात्रेण एव लुण्टाकान् अत्र आनयन्ति । अतः इतःपरं लुण्टाकानां ग्रहणविषये चिन्तां न करोतु" इति । एवम् उक्त्वा तान् शिलाखण्डान् चतसृषु दिशासु क्षिप्तवान् ।

पश्यति पिङ्गले, शिलानां मध्यतः भयङ्करगर्जनं कुर्वन्तः व्याघ्राः वृकाः च समुद्भूताः । कूर्दन्तः ते सर्वत्र व्याप्ताः ।

एतत् अद्भुतं दृश्यं दृष्ट्वा पिङ्गलः स्तम्भीभूतः । हसनगोरिणा मोचिताः वणिजः व्याघ्रान् वृकान् च दृष्ट्वा भीत्या धावन्तः, एतयोः समीपम् आगतवन्तः । हसनः अपि स्वसैनिकैः सह तत्र आगतवान् ।

वणिजः नु चिन्तितवन्तः आसन्– "मरुभूमिचोराणां बन्धने स्थितानाम् अस्माकं मोक्षः नास्ति एव । चोराणां हस्तैः एव अस्माकं मरणं इति तु निश्चितम् । भैरवनाथं पराजित्य अस्मान् मोचयितुं कः वा अत्र आगच्छेत् ? इतःपरं जन्मनि कदापि वयं पत्नीपुत्रादीन् द्रष्टुम् न शक्नुमः । 'पुण्यं सम्पादनीयम्' इति वयं तीर्थयात्रार्थं प्रस्थिताः। किन्तु दौर्भाग्यवशात् एषा दुर्गतिः प्राप्ता । दैवम् एव विपरीतं चेत् केन किं वा कर्तुं शक्यते ?" इति । किन्तु अकस्मात् प्राप्तं मोक्षं दृष्ट्वा ते सर्वे सन्तुष्टाः ।



हसनः आश्चर्यं प्रकटयन् उक्तवान्- "पिङ्गल! कीदृशम् आश्चर्यम् एतत् ! अस्मिन् प्रदेशे बहुकालतः निवसन् अहं कदापि एकम् अपि व्याघ्रं न दृष्टवान् । अद्य एते व्याघ्राः वृकाः च कथम् आगताः ? अस्यां मरुभूमौ मानवाः एव जीवितुं कष्टम् अनुभवन्ति। एवं स्थिते एते व्याघ्राः वृकाः च कथम् एवं पुष्टाः वर्धिताः ? एतावत्या सङ्ख्यया एते कथम् अत्र सम्मिलिताः ? किम् आश्चर्यम् एतत् ! मम मनसि तु किमपि न स्फुरति" इति एवं वदन् हसनः तदेकदृष्ट्या पिङ्गलं दृष्टवान् ।

पिङ्गलः पद्मपादं पृष्टवान्- "पद्मपाद ! इतःपरं विषयगोपनेन किमपि प्रयोजनं नास्ति । अतः सत्यं सर्वान् प्रति वदामि वा ? एतेन भवतः किमपि कष्टं नास्ति किल ?" इति ।

पद्मपादः शिरश्चालनपूर्वकम् अनुमतिं सूचितवान् । अनन्तरं महामायतः वशीकृतम् अङ्गुलीयकं निष्कास्य उन्नतशिलायाः उपरि स्थापितवान् । तदानीम् अङ्गुलीयकस्य तीक्ष्णप्रकाशतः समग्रः प्रदेशः व्याप्तः ।

पिङ्गलः तत्र सम्मिलितान् सर्वान् उद्दिश्य संक्षेपेण पद्मपादस्य परिचयम् उक्तवान् ।

अनन्तरं हसनम् उद्दिश्य उक्तवान्- "हसनमहोदय ! इतःपरं भैरवनाथग्रहणविषये चिन्तां न करोतु । पद्मपादेन सृष्टाः व्याघ्राः वृकाः च अल्पे एव काले भैरवनाथं तदनुचरान् च अत्र आनयन्ति ।"

पिङ्गलस्य वचनं यावत् न समाप्तं तावति काले एव पर्वतस्य कन्दरेषु कोलाहलध्वनिः उत्पन्नः । तेनैव सह व्याघ्राणां वृकानां च गर्जनध्वनिः अपि श्रुतः ।

क्रूरप्राणिनां आक्रमणतः आत्मानं रक्षयन्तः मरुभूमिचोराः इतस्ततः धावितुम् आरब्धवन्तः । किन्तु परितः व्याघ्राः वृकाः च आगच्छन्तः सन्ति । अतः भीताः ते अन्यमार्गम् अप्राप्य, आक्रोशनं कुर्वन्तः, पद्मपादः पिङ्गलः च यत्र स्थितवन्तौ, ताम् एव दिशम् अनुसृतवन्तः ।

( अनुवर्तते )






# स्वावलम्बनम्

'शठं प्रति शाठ्यम्' इति नीतिं परिपालयितुम् इव त्रिविक्रमः पुनः वृक्षसमीपम् गतवान्। वर्षाकालः। वायुप्रकोपकारणतः समग्रं वातावरणं भीकरं दृश्यते। किन्तु दृढव्रतः त्रिविक्रमः निश्चलबुद्ध्या वृक्षम् आरुह्य शवं स्कन्धे आरोप्य श्मशानाभिमुखं प्रस्थितः। तदा शवस्थितः वेतालः उक्तवान्- "महाराज! भवतः श्रमं पश्यतः मम संशयः- "भवान् स्वभावेन मुग्धः वा? उत भवतः दैवम् एव विपरीतं वा" इति। कदाचित् उदाराः अपि कठोराः भवन्ति। भवन्तं यः एतस्मिन् कार्ये नियोजितवान्, फले प्राप्ते, सः कठोरः न भविष्यति इत्यत्र कः विश्वासः? अत्र उदाहरणरूपेण अहं भीमसिंहनामकस्य महाराजस्य कथां कथयामि। कथां शृण्वन् गच्छन् भवान् प्रयाणजातं श्रमम् अपि विस्मरिष्यति।

राजा भीमसिंहः गिरिदुर्गराज्यस्य राजा।

## वेतालकथा



तस्मिन् राज्ये रामपुरग्रामस्य पार्श्वे लक्ष्मणपुरनामकः ग्रामः अपि आसीत्। रामपुरस्य अधिकारी भरतः जनहितचिन्तकः। लक्ष्मणपुरस्य अधिकारी गोपालः तु स्वार्थसाधकः।

भरतस्य जनप्रियतां दृष्ट्वा गोपालः मनसि एव खेदम् अनुभवति। यथाकथञ्चित् भरतस्य अपमाननं करणीयम् इति सः चिन्तयति स्म।

रामपुरं निम्नप्रदेशे अस्ति। तत् परितः यत्र कुत्रापि वृष्टिः भवतु, समग्रं रामपुरं जलमग्नं भवति स्म। प्रतिवर्षम् अपि वर्षाकाले एषा समस्या अस्ति एव। समस्या कथं निवारणीया इति भरतः सगम्भीरं चिन्तयति स्म। किन्तु उपायः न स्फुरति!

एकदा वसन्तकाले एकः सन्यासी रामपुरम् आगतवान्। रामपुरस्य समृद्धिं दृष्ट्वा सन्तुष्टः सः उक्तवान्- "भवतः प्रदेशे वर्षाकाले समीचीनां वृष्टिः भवतु। भवन्तः सर्वे एवम् एव सदा प्रसन्नाः जीवन्तु" इति।

तदा भीतिं प्रकटयन् भरतः उक्तवान्- "समीचीना वृष्टिः भवतु इत्येवम् आशीर्वादम् न करोतु। यतः वृष्टिश्रवणमात्रेण अस्माकं सर्वेषां भीतिः" इति। एवम् उक्त्वा सः वर्षाकाले उत्पद्यमानां ग्रामपरिस्थितिं समग्रम् निवेदितवान्।

तदा सन्यासी उक्तवान्- "एवं तर्हि अहं समग्रं ग्रामम् एकवारं सम्यक् परिशीलयितुम् इच्छामि। भवान् अपि मया सह आगच्छतु" इति।

भरतः सन्यसिने समग्रं ग्रामं प्रदर्शितवान्। 'वर्षाकाले केन मार्गेण जलम् आगमिष्यति, कथं ग्रामः जलमयः भविष्यति' इति विवरणं दत्तवान्।

सन्यासी किञ्चित् चिन्तयित्वा उक्तवान्- "भवतः समस्यायाः परिहारे विशेषकष्टं नास्ति। भवान् भवतः ग्रामं परितः विशालां गभीरां च एकां परिखां खानयतु। तथैव ग्रामसमीपे एकं सरोवरम् अपि खानयतु। सरोवरजलं परिखां गन्तुं यथा शक्नुयात्, तथैव परिखाजलं पर्वतप्रदेशं गन्तुं च यथा शक्नुयात् तथा कुल्याव्यवस्थां च करोतु। एतदर्थं सामान्यतः सार्धलक्षरूप्यकात्मकः

व्ययः भवेत्। एतत् धनं महाराजतः भवान् प्राप्तुम् अर्हति'' इति।

सन्यासिनः सूचना भरताय अरोचत। सः एतां योजनां व्यवहारे आनेतुं निश्चितवान्।

''एकः सन्यासी रामपुरं गत्वा भरतम् एकाम् उत्तमां योजनां सूचितवान्'' इति वार्ता गोपालः ज्ञातवान्। तद्दिने एव सः सन्यासिने लक्ष्मणपुरम् आगन्तुं आमन्त्रणं प्रेषितवान्। आगतं सन्यासिनं सः निवेदितवान् च- ''महानुभाव! अस्माकं कृते अपि एकम् उपायं सूचयतु, येन अस्मदीयः ग्रामः अपि सुखसम्पन्नः स्यात्'' इति।



लक्ष्मणपुरम् उन्नते स्थले आसीत्। अतः कथमपि प्रवाहभीतिः न आसीत्। तत्रत्याः सर्वे ग्रामवासिनः सुखसम्पन्नाः सन्तः शान्त–जीवनं यापयन्ति स्म।

सन्यासी लक्ष्मणपुरं समग्रम् अटित्वा दृष्ट्वा उक्तवान्- ''एतस्य ग्रामस्य जनाः भाग्यशालिनः। न केवलं ग्रामे, ग्रामं परितः अपि नारिकेलवृक्षाः यथेष्टं सन्ति। एतेषाम् उपयोगेन बहूनि वस्तूनि निर्मातुं शक्यन्ते। देशविदेशेषु एतेषां वस्तूनां विक्रयणं तु निश्चयेन भविष्यति। अतः एतदनुकूलानि यन्त्रागाराणि भवान् स्थापयतु। व्ययार्थं यानि पञ्चलक्षरूप्यकाणि आवश्यकानि तानि महाराज- भीमसिंहतः स्वीकरोतु। एतेन बहूनां जनानां जीवनं सुसम्पन्नं भविष्यति'' इति।

एतम् उपायं श्रुत्वा गोपालः बहु सन्तुष्टः सः सन्यासिने धन्यवादान् समर्पितवान्।

वृष्टिकारणतः ग्रामे जायमानाम् हानिं निवारयितुम् इच्छन् भरतः भीमसिंहं द्रष्टुं निर्गतः। एतत् श्रुत्वा गोपालः अपि महाराजं द्रष्टुं प्रस्थितः।

''स्वबुद्धिमत्तया अधिकं साहाय्यधनं प्राप्तव्यम्'' इति चिन्तयन् गोपालः भरतस्य अपेक्षया पूर्वम् एव राजधानीं प्राप्तवान्। तत्र चिरपरिचितं कोषाधिकारिणं दृष्टवान्। कोषाधिकारिणे आगमनकारणं निवेदितवान्।

तदा कोषाधिकारी गोपालं पृष्टवान्- ''मित्र! भवतः ग्रामे बहुकालतः नारिकेलवृक्षाः सन्ति



एव । इदानीं यन्त्रागारस्थापनयोजना कथम् अकस्मात् स्फुरिता ? अत्र किमपि अन्यकारणं स्यात् किल ?'' इति ।

''तथा किमपि नास्ति । मम तु नारिकेल-वृक्षाणां वाटिकाः बहवः सन्ति । तेषां वृक्षाणां सदुपयोगः स्वीकरणीयः किल ? यदि यन्त्रा-गाराणाम् आरम्भः भविष्यति तर्हि सिद्धानां वस्तूनां क्रेतारः अवश्यं लप्स्यन्ते एव'' इति उक्तवान् गोपालः ।

कोषाधिकारी पुनः पृष्टवान्- ''तर्हि एतेन उद्यमेन भवान् अधिकं लाभं सम्पादयितुम् इच्छति । एवं किल ?''

''तत्तु सत्यम् । कृतस्य परिश्रमस्य अनु-गुणं लाभस्य निरीक्षा, स्वीकारः वा अनुचितं न किल ? वाणिज्ये एतत् सर्वं सहजम्'' इति उक्तवान् गोपालः ।

''भवान् सत्यम् एव उक्तवान् । अतः अहम् अपि एकं योग्यम् उपायं सूचयामि । अस्माकं महाराजः दयालुः इति सर्वे जानन्ति एव । किन्तु महाराजस्य विचारसरणिः किञ्चित् भिन्ना । 'जनाः यावत् याचन्ते तावत् पूर्णतया न दातव्यम्' इति तस्य सिद्धान्तः । अतः भवान् पञ्चलक्षरूप्यकाणि इच्छति चेत् द्वादशलक्ष-रूप्यकाणि पृच्छतु । तदा भवता षट्लक्षरूप्य-काणि प्राप्यन्ते ।''

''मम तु षट्लक्षरूप्यकाणि न अपेक्षितानि । पञ्चलक्षरूप्यकाणि एव पर्याप्तानि । अतः दशलक्षम् एव पृच्छामि'' ।

''भवान् मदभिप्रायं न गृहीतवान् । षट्लक्षम् एव प्राप्नोतु । एकलक्षम् अवशिष्यते किल ? तत्र अर्धार्धं स्वीकुर्वः'' इति कोषाधि-कारी हसन् उक्तवान् ।

गोपालः सन्तोषेण कोषाधिकारिणः वचनम् अङ्गीकृतवान् । कोषाधिकारी तम् एकसप्ताहं राजधान्यां स्थातुं सूचितवान्- ''अहं तु मम ग्रामे यन्त्रगारस्थापनं करिष्यामि । तेन यथेष्टं लाभम् अपि प्राप्स्यामि च। भरतः तु ग्रामीणा-नाम् उपकारार्थं कार्यं करोति । अधिककीर्तिं च सम्पादयिष्यति । यथाकथञ्चित् तदीया यशः-प्राप्तिः निवारणीया'' इति ।

एवं चिन्तयित्वा गोपालः भरतसमीपं गत्वा

उक्तवान्-"मित्र ! भवान् तु मम पार्श्वग्रामे एव निवसति । अतः अहम् एकं रहस्यं निवेदयामि । राजानं कश्चित् अधिकं धनं पृच्छति चेत् सः कुपितः भविष्यति । तादृशान् निवारयिष्यति च । किन्तु तस्य अन्यः अपि एकः स्वभावः यत् यः अल्पं धनं पृच्छति तस्मै द्विगुणितं धनं ददाति । एतद्द्वयम् अपि दिनद्वयतः अत्र एव निवसन् अहं ज्ञातवान् । अतः भवान् एक-लक्षरूप्यकाणि एव पृच्छतु । तदा लक्षद्वयं प्राप्नोति । व्ययानन्तरम् अपि भवतः समीपे अर्धलक्षम् अवशिष्यते" इति ।

भरतः किमपि उत्तरं न दत्तवान् । सः मौनं स्थितवान् । गोपालस्य वचनानि तस्मै न अरोचन्त । किन्तु 'धनप्रार्थनसमये न्यूनम् एव प्रष्टव्यम्' इति सः निश्चयं कृतवान् ।

चतुर्णाम् दिनानाम् अनन्तरं महाराजः विभिन्नप्रदेशेभ्यः आगतान् ग्रामाधिकारिणः सर्वान् आहूतवान् । 'स्वकीयाम् अपेक्षां प्रकट-यन्तु' इति ग्रामाधिकारिणः आदिष्टवान् ।

ग्रामाधिकारिणः क्रमशः स्वकीयाम् आवश्य-कतां निवेदितवन्तः । प्रार्थितस्य अर्धांशं दातुम् एव राजा अनुमतिं ददाति स्म । भरतः एतत् सर्वं परिशीलयन् आसीत् ।

कश्चित् ग्रामाधिकारी स्वग्रामं परितः परिखां खानयितुं त्रिलक्षरूप्यकाणि पृष्टवान् । किन्तु राजा तस्मै सार्धलक्षरूप्यकाणि एव दत्तवान् ।

यदा भरतसिंहस्य पर्यायः आगतः तदा सः राजानं निवेदितवान्- "महाराजः ! मम ग्रामं





परितः परिखा खाननीया अस्ति। तदर्थं पञ्चाशत्सहस्ररूप्यकाणि अपेक्षितानि" इति।

राजा आश्चर्येण पृष्टवान्- "तावदेव? इदामिदानीम् अहम् एकस्य ग्रामाधिकारिणः कृते परिखनिर्माणार्थं सार्धलक्षरूप्यकाणि दत्तवान्। भवान् तु केवलं पञ्चाशत्सहस्राणि पृच्छति। भवदीयः ग्रामः आकारेण अल्पः वा?" इति।

"प्रभो! अस्माकं ग्रामः न तथा अल्पाकारकः। वयम आवश्यकतापूरणार्थम् पूर्णतया भवन्तम् एव आश्रयितुं न इच्छामः। वस्तुतः अस्माकं कृते अपि सार्धलक्षरूप्यकाणि आवश्यकानि। वयं ग्रामवासिनः सर्वे श्रमदानं कुर्मः। तथैव पञ्चाशत् सहस्राणि ग्रामवासिनः दानरूपेण स्वयं यच्छन्ति। अस्माकं राज्ये अस्मद्ग्रामसदृशाः ग्रामाः बहवः सन्ति। सर्वे अधिकाधिकं धनासाहाय्यं पृच्छन्ति चेत् राजा भवान् कुतः वा दद्यात्? यदि ग्रामाः स्वयं समर्थाः भवन्ति, तर्हि राज्यस्य प्रगतिः साधयितुं शक्यते। प्रजानाम् उपरि करभारः अपि न्यूनः भविष्यति।

किन्तु वयम् इदानीम् अपि आर्थिकदृष्ट्या स्वयंपूर्णाः न। यथाशक्ति वयं सङ्ग्रहं कुर्मः। तथापि अधिकं धनम् आवश्यकं भविष्यति। तदर्थम् अहं भवन्तं पृष्टवान्" इति उक्तवान् भरतः।

भरतस्य वचनेन राजा बहु सन्तुष्टः। सः उक्तवान्- "भवतः ग्रामः आदर्शग्रामः। भवान् अपि सर्वेषाम् अधिकारिणाम् आदर्शः भवितुम् अर्हति। भवतः ग्रामार्थं द्विलक्षरूप्यकाणि ददामि" इति।

अनन्तरं महाराजः अन्यान् अधिकारिणः उद्दिश्य उक्तवान्- "भवतां ग्रामाणां विषये इदानीं मदीयः अभिप्रायः परिवर्तितः अस्ति। अहम् इदानीं कस्मै अपि आर्थिकसाहाय्यं न करोमि। अल्पे एव काले सर्वत्र एकम् अधिकारिणं प्रेषयिष्यामि। सः एव भवदीयाम् आवश्यकतां परिशील्य निर्णयं स्वीकरिष्यति। तदनुगुणम् अहं धनसाहाय्यं करिष्यामि। किन्तु सर्वेषां स्मरणे तिष्ठतु यत्- अहं साहाय्यरूपेण यत् धनं ददामि तत् ऋणत्वेन। ऋणमुक्ति यावत् ग्रामस्य जनाः प्रतिगृहं शतं रूप्यकाणि

दद्युः" इति।

एतं निर्णयं श्रुत्वा सर्वे ग्रामाधिकारिणः हाहाकारम् कृतवन्तः। किन्तु राजा एतत् सर्वम् अविगणय्य, सिंहासनात् उत्थाय अन्तःपुरं प्रविष्टवान्।

वेतालः एवं कथां समाप्य उक्तवान्- "राजन्! धर्मात्मरूपेण प्रसिद्धस्य महाराजस्य एषः व्यवहारः उचितः वा? राजा रामपुरस्य अधिकारिणे भरताय द्विलक्षरूप्यकाणि पारितोषिकरूपेण दत्तवान्। किन्तु अन्येभ्यः ऋणरूपेण अपि धनं दातुं सः न सिद्धः। एषः व्यवहारः महाराजस्य कृपणत्वं द्योतयति किल? वस्तुतः महाराजस्य व्यवहारे अकस्मात् परिवर्तनं यत् दृष्टं तत्र किं कारणम्? एतस्य सन्देहस्य उत्तरं जानन् अपि यदि भवान् तूष्णीं तिष्ठति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्।"

तदा त्रिविक्रमः उक्तवान्- "महाराजस्य व्यवहारे यत् परिवर्तनम् अकस्मात् दृष्टं तत्र तदीयं कृपणत्वं कारणं न। भरतस्य वचनेन महाराजः सत्यं ज्ञातवान्। बहवः ग्रामाधिकारिणः केनापि व्याजेन अधिकम् आर्थिकसाहाय्यं स्वीकृत्य, स्वार्थाय तस्य धनस्य उपयोगं कुर्वन्ति स्म। एतेन प्रजानाम् उपरि अधिकः करभारः स्थाप्यते स्म।

भरतः यथा स्वग्रामे कृतवान् तथैव सर्वे आचरन्ति चेत् समग्रस्य देशस्य हितं सिध्यति स्म। ग्रामस्य आवश्यकताः यावच्छक्यं ग्रामीणैः एव यदि पूर्यन्ते तर्हि महाराजस्य उपरि भारः न्यूनः भविष्यति। तदा एव राजा नवीनाः अभिवृद्धियोजनाः रूपयितुं शक्तः भविष्यति।

'एतत् सत्यं सर्वे ग्रामाधिकारिणः जानन्तु' इति दृष्ट्या एव राजा धनसाहाय्यविषये तादृशान् कठिननियमान् उक्तवान्।"

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवे स्थितः वेतालः अदृश्यः भूत्वा वृक्षस्य-शाखाम् अवलम्बितवान्।



# अङ्गरक्षकः

चन्दनपुरस्य महाराजस्य एकः अङ्गरक्षकः आवश्यकः आसीत् । एतत् पदम् अपेक्षमाणाः बहवः आगतवन्तः । तेषु चत्वारः उत्तमत्वेन परिगणिताः । चत्वारः अपि पराक्रमेणसमानाः । मन्त्री तु एतेषु अन्यतमं कार्यदक्षम् स्वीकर्तुम् इच्छति स्म ।

अतः मन्त्री एकां लघुपरीक्षाम् आयोजितवान् । सः उक्तवान्– "भवन्तः चिन्तयन्तु– राजा कदाचित् परिवारेण सह मृगयार्थम् अरण्यं गच्छति । अटनेन श्रान्तः सः वृक्षस्य छायायाम् विश्रान्तिम् अनुभवति । तदा भवत्सु एकः तत्र अङ्गरक्षकरूपेण अस्ति । तदानीम् एकः व्याघ्रः महाराजस्य उपरि आक्रमणं करोति । एतस्यां परिस्थितौ भवन्तः किं कुर्वन्ति ?"

एकः उक्तवान्– "अहं भयङ्करं गर्जनं कुर्वन् व्याघ्रं मारयामि" इति । द्वितीयः उक्तवान्- "अहं खड्गं स्वीकृत्य, व्याघ्रस्य पृष्ठतः गत्वा आक्रमणं करोमि ।" तृतीयः उक्तवान्– "अहं व्याघ्रस्य महाराजस्य च मध्ये स्थित्वा अल्पे एव काले व्याघ्रं मारयामि ।"

चतुर्थः मन्त्रिणः प्रश्नं श्रुत्वा हसन् उक्तवान्– "मयि विद्यमाने, व्याघ्रः महाराजस्य उपरि आक्रमणं कर्तुं न शक्नोति । अहं सर्वदा जागरूकः भूत्वा सर्वत्र पश्यन् भवामि किल ?" इति ।

मन्त्री चतुर्थम् एव युवकम् अङ्गरक्षकत्वेन स्वीकृतवान् ।






# मूलकारणम्

कदाचित् कश्चित् भूस्वामी स्वसभासदान् उद्दिश्य एकं प्रश्नं पृष्टवान्- "सर्वेषाम् अनर्थानां मूलं किम् इति यः वदति तस्मै शतं रूप्यकाणि ददामि" इति ।

कश्चित् 'अनर्थानां मूलं गर्वः' इति उक्तवान् । अन्यः 'अनृतम् एव कारणम्' इति उक्तवान् । अपरः अज्ञानम् एव कारणम् इति उक्तवान् । एवं सर्वे स्वबुद्ध्यनुसारम् उत्तरम् उक्तवन्तः । किन्तु केनापि उत्तरेण भूस्वामी तृप्तिं न प्राप्तवान् ।

तदा रघुनाथनामकः एकः उत्थाय उक्तवान्- "अहम् उत्तरम् जानामि । किन्तु भवता उद्घोषितं पारितोषिकम् अल्पमूल्यकम् । अतः उत्तरकथने अहं सङ्कोचम् अनुभवामि ।"

भूस्वामी अविलम्बेन उक्तवान्- "यदि उत्तरं समीचीनम् इति मम मनसि भाति तर्हि अहं द्विशतं रूप्यकाणि ददामि ।"

तदा रघुनाथः उक्तवान्—"प्रपञ्चे सर्वेषाम् अनर्थानां मूलं धनम् एव । धनकारणतः एव अन्यायः, अत्याचारः, मारणं, युद्धम् इत्यादिकं सर्वं प्रचलति" इति । अनन्तरं सः बहु कथाः उक्त्वा स्ववादं पुष्टीकृतवान् ।

भूस्वामी रघुनाथस्य समग्रं विवरणं श्रुत्वा उक्तवान्- "भवतः उत्तरेण अहं तृप्तः वा न वा इति तु अन्यः विषयः । किन्तु भवता स्ववादस्य पुष्ट्यर्थं याः कथाः उक्ताः ताभिः अहं सन्तुष्टः । भवान् तु समर्थः कथाकारः" इति । अनन्तरं भूस्वामी तस्मै द्विशतं रूप्यकाणि-पुरस्काररूपेण दत्तवान् ।

तस्यां सभायां कुत्सितः नाम कश्चित् आसीत् । तस्य वास्तविकं नाम कोऽपि न जानाति । तदीयं व्यवहारं दृष्ट्वा सर्वे-कुत्सितनाम्ना व्यवहरन्ति स्म । एषः कुत्सितः सभायाम् अकस्मात् उत्थाय उक्तवान्—

"रघुनाथः सर्वान् वञ्चयन् अस्ति । सः सर्वेषाम् अनर्थानां मूलं धनम् एव इति वदन् किमर्थं वा पुरस्काररूपेण पुनः धनं स्वीकरोति? एतेन ज्ञायते यत्– स्वस्य उत्तरे एव तस्य विश्वासः नास्ति इति । एषा तु वञ्चना एव । सभायाम् एतादृशी वञ्चना तु महते अपराधाय" इति ।

तदा भूस्वामी रघुनाथं पृष्टवान्- "भवान् एतद्विषये किं वदति ?" इति ।

रघुनाथः उत्तरितवान्- "धनम् अनर्थस्य मूलम् इति जानन् मानवः धनार्थं प्रयत्नं करोति । एतेन धनस्य अनर्थकारित्वम् एव प्रतिपादितं भवति" इति ।

एतत् उत्तरं श्रुत्वा कुत्सितं विना सर्वेऽपि करताडनं कृतवन्तः । कुत्सितः रघुनाथं पृष्टवान्- "धनम् अनर्थकारि इति ज्ञात्वा अपि यः तदेव इच्छति सः मूर्खः एव । अतः भवान् मूर्खः वा ?"

कुत्सितं तीक्ष्णदृष्ट्या पश्यन् रघुनाथः पृष्टवान् "मित्र ! स्वजीवनं शाश्वतं इति भवान् चिन्तयति वा ?"

"कदापि न" कुत्सितः उक्तवान् ।

रघुनाथः पुनः पृष्टवान्- "भवतः मरणं कदा भविष्यति इति भवान् जानाति वा?"

"नैव, सर्वेषाम् अपि मरणं अज्ञातम् एव भविष्यति । मम अपि तथैव ।"

"इदानीं वदतु- भवान् इतोऽपि कानिचन दिनानि जीवितुम् इच्छति वा ? उत इदानीम् एव मरणम् इच्छति वा ?"

कुत्सितः प्रतिप्रश्नं कृतवान्- "भवान् किम् इच्छति ? वदतु ।"

"अहं तु मूर्खः । अतः अहं जीवनम् एव इच्छामि । भवान् किम् इच्छति इति ज्ञातुम् इच्छामि ।"

एतत् श्रुत्वा सर्वे सभासदाः हसितवन्तः । अपमानितः कुत्सितः लज्जया शिरः अवनमितवान् । भूस्वामी रघुनाथम् अधिकपुरस्कारेण सम्मानितवान् ।





# वक्र बुद्धिः

पुरा ब्रह्मदत्तः काशीनगरं परिपालयति स्म। तदा एकस्मिन् ग्रामे एकः ब्राह्मणः आसीत्। सः तपः कृत्वा मन्त्रसिद्धिं प्राप्तवान्। तस्य विशेषमन्त्रस्य नाम सम्पत्करः इति। तस्य महामन्त्रस्य महत्त्वम् एवंरूपम् आसीत्, यत् यदा सर्वे ग्रहाः एकत्र सम्मिलन्ति, तदा अस्य मन्त्रस्य पठनं कर्तव्यम्। तदा सुवर्णं, रजतं, मौक्तिकं, प्रवालं, रत्नं, माणिक्यम् इत्यादयः सर्वविधाः अमूल्यमणयः वृष्टिवत् आकाशतः पतन्ति स्म। किन्तु एतादृशः ग्रहयोगः बहुविरलतया भवति।

बोधिसत्वः अस्य मन्त्रसिद्धस्य ब्राह्मणस्य शिष्यः आसीत्। आश्रमे अनेके शिष्याः आसन्। किन्तु बोधिसत्वं प्रति गुरोः अत्यधिकप्रीतिः आसीत्। एकदा ब्राह्मणः प्रियशिष्येण सहं किञ्चित्कार्यार्थम् आश्रमतः प्रस्थितवान्। गमनसमये एकम् अरण्यं प्रविश्य तत्र अरण्यमार्गे गच्छति स्म।

तस्मिन् अरण्ये पञ्चशतचोराः गुप्तरूपेण वसन्ति स्म। ते गुरुशिष्ययोः उपरि आक्रमणं कृतवन्तः। यद्यपि गुरुशिष्ययोः समीपे अमूल्यवस्तु किमपि नासीत्, तथापि ते चोराः तौ न अमुञ्चन्। तेषां चोराणाम् एकः नियमः आसीत्। यदा द्वौ पथिकौ तस्मिन् मार्गे गच्छतः, तदा एकस्य गृहं गन्तुम् अवकाशम् मिलति। सः गृहं गत्वा चोरैः निर्दिष्टं धनं आनयति चेत् द्वयोः अपि विमोचनं भवति। नो चेत्, द्वयोरपि मरणम्।

यदि पिता पुत्रः च तत्र आगच्छतः, तर्हि पिता गृहं गन्तुम् अवकाशं प्राप्नोति। एकमेव मातापुत्र्योः मध्ये माता, सहोदरयोः मध्ये एकः, गुरुशिष्ययोः मध्ये शिष्यः च धनार्थं गृहं गन्तुम् अवकाशं प्राप्नुवन्ति। यदि न्यूनं धनम् आनयन्ति, तर्हि एकस्य विमोचनम्, अन्यस्य

"जातककथा"



मरणम् इति चोराणां क्रमः आसीत् ।

एतादृशचोराः ब्राह्मणं बद्ध्वा स्ववशे गृहीतवन्तः । शिष्यं बोधिसत्वं दशसहस्रदीनारान् आनयतु इति आज्ञां कृत्वा प्रेषितवन्तः ।

गमनतः पूर्वं बोधिसत्वः गुरुं नमस्कृत्य रहस्यरूपेण "गुरूवर्य, भीतिः मास्तु । दिनद्वये एव अहं धनं गृहीत्वा प्रत्यागमिष्यामि । भवान् तु कृपया मम एकं विज्ञापनं शृणोतु । अद्य सर्वेषां ग्रहाणां मेलनदिनम् अस्ति । तस्य प्रयोजनं गृहीत्वा अत्र विमोचनं प्राप्तुं भवान् सर्वथा न चिन्तयतु । यदि तथा क्रियते, तर्हि भवतः एतेषां चोराणां च महती विपत्तिः सम्भवेत् । एषः धनवर्षणयोगः व्यर्थः भवति इति चिन्ता मास्तु । पुनः यदा कदाचित एतादृशः योगः अवश्यं सम्भविष्यति एव" इति आग्रहपूर्वकम् उक्त्वा धनानयनार्थं गतवान् ।

किञ्चित्कालानन्तरं सूर्यः अस्तं गतः । ब्राह्मणः चोराणां मध्ये आसीत् । निर्मले आकाशे पूर्णचन्द्रः राजते स्म । तस्य प्रकाशः सर्वत्र प्रसारितः आसीत् । ब्राह्मणः आकाशं चन्द्रं च दृष्ट्वा चिन्तामग्नः जातः । तस्मिन् बन्धने प्रतिक्षणं सः पीडाम् अनुभवति स्म । शिष्यस्य प्रत्यागमनार्थं दिनद्वयम् अपेक्षितम् । तावत्पर्यन्तं चोराणां मध्ये मया कुतः क्लेशः अनुभवनीयः ? मम भाग्यवशात् आकाशे ग्रहकूटः सन्निहितः अस्ति । इदानीं मन्त्रपठनेन सुवर्णवर्षणं भवति । तं धनराशिं दृष्ट्वा सन्तुष्टाः चोराः आदरपूर्वकं मम बन्धविमोचनं कुर्वन्ति इति सः आलोचितवान् । एवंरीत्या चिन्तयन् सः ब्राह्मणः बोधिसत्वस्य वचनानाम् अन्तरार्थं न गृहीतवान् ।

अनन्तरं ब्राह्मणः चोराणां समूहं दृष्ट्वा "भवन्तः माम् अत्र कुतः बन्धितवन्तः ? धनार्थं खलु ?" इति पृष्टवान् ।

"आम्, सत्यम् । धनार्थमेव । न्यूनातिन्यूनं पञ्चसहस्रदीनाराः भवतः शिष्येण आहरणीयाः । तदपेक्षया अपि न्यूनं भवति चेत्, नास्ति विमोचनम्" इति चोराः उक्तवन्तः ।

"एतावदेव खलु ! इदानीं भवन्तः मम वचनम् अनुसृत्य कार्यं कुर्वन्ति चेत्, भवतु



एकैकः अपि सहस्रदीनारान् प्राप्नोति। प्रथमं मम बन्धनश्रृङ्खलाः अपनयन्तु। शुभजलेन अहं स्नानं करोमि। मदर्थं नूतनवस्त्राणि यच्छन्तु। शीघ्रं विविधानि पुष्पाणि संगृह्य आनयन्तु। धूपदीपसुगन्धादीनि पूजाद्रव्याणि आनीय सज्जीकुर्वन्तु। अनन्तरं यत् सम्भवति तत् भवतामेव प्रत्यक्षं भवति'' इति। ब्राह्मणः पूजां समाप्य, आकाशं पश्यन् अञ्जलिं बद्ध्वा प्रदक्षिणं कुर्वन् सम्पत्करमन्त्रं पठितवान्। तदा आकाशतः नक्षत्राणि इव सुवर्णरजतरत्नादयः वृष्टिरूपेण भूमौ अपतन्। चोराः तु आश्चर्येण सन्तोषेण च पुलकिताः भूत्वा शीघ्रं शीघ्रं तं धनराशिम् अशेषतया सङ्गृहीतवन्तः। अनन्तरं तं धनराशिं गृहीत्वा अग्रे प्रस्थिताः चोराः स्वीयसमूहेन सह आगन्तुं ब्राह्मणम् अपि आहूतवन्तः।

''कुतः मया आगन्तव्यम्? भवताम् इष्टसिद्धिः अभवत् किल?'' इपि ब्राह्मणः पृष्टवान्।

''एतत् सर्वं मन्त्रप्राप्तं धनम्। एतेन धनेन अस्माकं व्यवहारार्थं प्रयोजनं भवति वा न वा इति परीक्षानन्तरम् एव भवतः विमोचनम्। चलन्तु'' इति उक्तवन्तः चोराः।

गत्यन्तराभावात् ब्राह्मणः तैः सह प्रस्थितः।

किञ्चिद्दूरे अन्यः महान् चोरसमूहः भयङ्करैः मारकायुधैः सन्नद्धः दृष्टः। तेन समूहेन प्रथमसमूहस्य उपरि आक्रमणं कृतम्।

कुतः इदम् आक्रमणम? इति प्रथमसमूहस्य चोराः पृष्टवन्तः। किम् अन्यत् स्यात्? धनार्थमेव! इदानीं कापि चर्चा मास्तु। सर्वं धनम् अत्र स्थापयित्वा गच्छन्तु'' इति द्वितीयसमूहस्य चोराः उक्तवन्तः।

''एतावदेव खलु? पश्यन्तु एतं मन्त्रसिद्धं ब्राह्मणम्। एषः केवलम् आकाशं नमस्कृत्य तिष्ठति। अमूल्याः मणिमाणिक्यादयः वृष्टिवत् पतन्ति। एवं कृत्वा एव इदं सर्वं धनम् अस्मत्कृते एतेन ब्राह्मणेन सम्पादितम्'' इति उक्तवन्तः प्रथमसमूहस्य चोराः।

''एतत्सर्वं सत्यं वा?'' इति द्वितीयसमूहस्य चोराः पृष्टवन्तः। ''आम्, सत्यम्।



किन्तु........" इति वदन् ब्राह्मणः वाक्यं पूरयितुम् असमर्थः भूत्वा मूकवत् स्थितवान्।

"किञ्चित् सावधानेन पृच्छन्तु" इति उक्त्वा प्रथमचोराः अग्रे गतवन्तः। इदानीं ब्राह्मणः द्वितीयचोराणां हस्ते पतितः।

"भोः ब्राह्मण ! अस्मत्कृते अपि धनं सम्पादय यच्छतु" इति ते चोराः आग्रहपूर्वकम् पीडयितुम् आरब्धवन्तः।

निरुपायः ब्राह्मणः दैन्यभावेन "भो भो भ्रातरः ! इतः पूर्वं मया यत् धनं चोरेभ्यः दत्तं, तत् केवलं मन्त्रप्रभावेण प्राप्तं धनम्। न अन्यत्, पुनः एकवर्षानन्तरम् एव तं मन्त्रं प्रयोक्तुं शक्यते। तदर्थं सर्वग्रहकूटः अपेक्षितः। इदानीं सः कूटः व्यपगतः। मम इच्छानुसारेण यदा-कदाचित् मन्त्रपठनेन किमपि प्रयोजनं न भवति। पुनः वर्षानन्तरं यदा कूटयोगः भविष्यति, तदा भवद्भ्यः धनं प्राप्य दास्यामि' इति प्रार्थितवान्।

किन्तु तस्य वचने चोराणां विश्वासः न अभवत्। "रे अधमब्राह्मण ! अस्मत्तः पूर्वम् आगतेभ्यः अष्टैश्वर्यं प्रदाय भवान् प्रेषितवान्। इदानीं अस्मभ्यं तु वर्षात्मकम् अवधिं पृच्छति वा ?" इति भर्त्सयन्तः हिंसितवन्तः। तया हिंसया विलप्य ब्राह्मणः तत्रैव मृतः। तस्य शवः मार्गपार्श्वे स्थितस्य वृक्षस्य शाखायां चोरैः बद्धः।

अनन्तरं सर्वे ते चोराः अत्यावेशेन शीघ्रं शीघ्रं धावन्तः गत्वा प्रथमचोरान् प्राप्य तान् सर्वान् हतवन्तः। तेषां सर्वं धनराशिं स्वयमेव अपहृतवन्तः।

इदानीं नूतनतया प्राप्तं धनं स्वकीयेषु विभागं कर्तुं ते उद्युक्ताः। तस्मिन् समये तेषु परस्परं भिन्नाभिप्रायेण पक्षद्वयं जातम्। क्रमेण पक्षयोः मध्ये द्वेषः संवृद्धः। महान् कोलाहलः कलहः च जातः। तदा शताधिकाः चोराः मृताः। अन्ते द्वौ एव चोरौ अवशिष्टौ। तदा तयोः किञ्चित् विवेकः जातः। इतःपरं कलहः मास्तु, स्नेहेन भवावः इति निश्चित्य, सर्वं धनं समीपे एव एकस्मिन् गुप्तस्थाने स्थापितवन्तौ।

तदा तयोः द्वयोरपि अतीव बुभुक्षा जाता। एकः खड्गं गृहीत्वा धनरक्षणार्थं तत्रैव स्थितवान्। अन्यः आहारम् आनेतुं नगरं गतवान्।

प्रथमः धनरक्षकः चोरः मनसि "इदानीं मम मित्रम् आगत्य अस्य अपारधनस्य अर्धं वृथा अपहरति। यदि अहं तं हनिष्यामि, तर्हि इदं सर्वं ममैव भविष्यति" इति चिन्तयन् तदर्थं सिद्धः भूत्वा प्रतिपालयति स्म।

द्वितीयः नगरं गच्छन् 'सः अन्तिमः मृतः चेत् समस्तस्य धनस्य अहमेव अधिकारी भविष्यमि! एतादृशात् अवकाशात् न अहं वञ्चनीयः इति चिन्तयित्वा स्वकीयम् आहारभागं पृथक् संरक्ष्य, अवशिष्टे आहारे तीक्ष्णं विषं मिश्रितवान्।

यदा सः आहारं गृहीत्वा प्रत्यागतः, तदा धनरक्षकः चोरः एकेनैव प्रहारेण तम् हत्वा अत्यन्तसन्तोषेण नर्तनं कृत्वा निश्चिन्तभावेन एकत्र उपविश्य विषमिश्रितम् आहारं भक्षितवान्। द्वितीयक्षणे सः अपि मृतः।

एवंक्रमेण ब्राह्मणस्य सर्वेषां चोराणां च मरणानन्तरं कोलाहलरहिते तस्मिन् निर्जने अरण्ये अचेतनं धनमपि एकत्र पतितम् आसीत्।

दिनद्वयानन्तरं शिष्यः बोधिसत्वः विमोचनार्थं चोरैः निर्दिष्टं धनं गृहीत्वा अरण्यं प्रत्यागतवान्। तत्र ब्राह्मणम् अदृष्ट्वा सर्वत्र अन्विष्टवान्। सर्वत्र अपरिचितानां शवाः? ब्राह्मणः कुत्रापि न दृष्टः। तदा बोधिसत्वः "एषः ब्राह्मणः मम वचनं नैव लक्षितवान् इति प्रतिभाति। चापल्येन यत् चिन्तितं, तदेव कृतवान्। परह्यः पूर्णिमायां धनयोगं त्यक्तुम्



असमर्थः एषः निर्भाग्यः मन्त्रं पठित्वा सुवर्णवर्षणं प्राप्तवान् अस्ति। तस्य फलरूपाः एव एते शवाः" इति चिन्तयन् भयभ्रान्तः भूत्वा पुनः ब्राह्मणम् अन्विष्यन् अग्रे प्रस्थितवान्। अनन्तरं किञ्चिद्दूरे वृक्षस्य शाखायां लम्बमानं ब्राह्मणस्य शवं दृष्टवान्। "हा हन्त! आचार्य! मम वचनं तृणीकृत्य भवान् ईदृशीं दुर्गतिं प्राप्तवान् किल?" इति विलपन् गुरोः शवं वृक्षतः अधः आनीय चितां निर्माय गुरोः दहनक्रियादिकं कृतवान्। अरण्यपुष्पाणि आनीय अर्पितवान्। तथा अश्रुतर्पणपूर्वकं गुरवे अन्तिमनमस्कारं समर्पितवान्।

तस्मात् स्थानात् प्रस्थितः बोधिसत्वः तथैव अग्रे अग्रे गतवान्। प्रथमं प्रथमसमू-

हस्य चोराणां शवाः दृष्टिपथं गताः। पुनः किञ्चिद्दूरे द्वितीयसमूहस्य चोराणां शवाः दृष्टाः। धनं पुनः केन अपहृतं स्यात् इति चिन्तयन् शवान् अगणयन् अग्रे गतवान्। अनन्तरं चतुर्णां पादानां चिह्नानि दृष्ट्वा तानि एव अनुसरन् घनारण्यं प्रविष्टवान्।

एकत्र गुल्मानां मध्ये धनराशिः दृष्टः। एकः शवः अपि तत्र आसीत्।

तत्रैव पार्श्वे आहारपदार्थाः आसन्। "अहो! एवं जातं वा?" इति बोधिसत्वस्य मुखतः उद्गारः निःसृतः। अन्यस्मिन् पार्श्वे अन्यस्य शरीरखण्डाः पतिताः आसन्। एतत्-सर्वं दृष्ट्वा तावत्पर्यन्तं यद्यत् जातं, तत्सर्वं चित्रलिखितम् इव बोधिसत्वः ज्ञातवान्। तेन दुःखितः सः मूकवत् किञ्चित्कालपर्यन्तं तथैव स्थितवान्।

एतत्सर्वं आलोचयन् बोधिसत्वः एकं महातत्त्वं ज्ञातवान्। "विवेकं विना महती विद्या विद्वत्ता च व्यर्था एव। स्पष्टतया उक्तम् अपि वचनं गुरुः तिरस्कृतवान्। यद्यपि मम गुरुः स्वीयमन्त्रशक्त्या प्रभूतां सम्पत्तिम् उत्पादितवान्। किन्तु तया सम्पत्त्या भूलोकस्य किमपि प्रयोजनं न अभवत्। प्रत्युत मानव-समूहस्य नाशः सञ्जातः। अतः यदि बुद्धिः वक्रमार्गं गृह्णाति, तर्हि सर्वेषां वस्तूनां नाशः एव सम्भवति। दोषः वस्तुनि नास्ति, बुद्धौ एव अस्ति। वक्रबुद्धिः अग्निज्वालासदृशी भवति। अनेकान् नाशयित्वा एव तस्याः शमनं भवति।" एवंरूपेण बोधिसत्वः उच्चैः उपदेशं कृतवान्। समस्ते अरण्ये तस्य वचनानां प्रतिध्वनिः जातः। स्वीयगुरोः उदाहरणं प्रदर्श्य स्ववचनानां स्पष्टीकरणं कृतवान्। बोधिसत्वस्य उपदेशं श्रुत्वा वनदेवताः जयध्वनिं घोषितवत्यः।

अनन्तरं बोधिसत्वः तं धनराशिं गृहीत्वा स्वकीयम् आश्रमं गतवान्। लोकस्य उपकाराय तस्य धनस्य विनियोगं कृतवान्। अन्ते स्वस्य अवतारं समापितवान्।





## तात्याटोपे कुवरसिंहःच

सैनिककान्त्यां तात्याटोपे अपूर्वं धैर्यं, साहसं, युद्धकौशलं च प्रदर्शितवान्। साम्प्रदायिककुटुम्बे जातः एषः वृत्त्या लिपिकारः आसीत्। किन्तु यजमानस्य गौरवरक्षणार्थं शस्त्रं गृहीतवान्। सः सामान्यं जनम् अपि योग्यं सैनिकं कर्तुम् समर्थः आसीत्।

एकदा एषः कदाचित् आंग्लसैन्यं पराजित्य कानपुरपर्यन्तं तत् सैन्यम् अनुसृत्य धावितवान्। आंग्लसेनापतिः स्वदयनीयस्थितिं, भारते स्थिते आंग्लप्रधानसेनापतिं, सर कोलिन् काम्बेलमाहोदयं दूतद्वारा निवेदितवान्।





एतां वार्तां श्रुत्वा काम्बेलः महत्या सेनया सह कानपुरं प्राप्तवान्। तस्मिन् समये तात्याटोपे कालपिनगरे आसीत्। सः बहुवारं काम्बेलं विरुध्य युद्धं कृतवान्। तस्य साहसेन युद्धकौशलेन च आंग्लाः चकिताः।



एकदा तात्याटोपे अस्वस्थः जातः। तदा सः एकं सामान्यराजं आश्रयं प्रार्थितवान्। सः राजा आदरेण सत्कृतवान्। भारतीय - शासकानां श्रेयोभिवृद्धये अहर्निशं प्रयतमानं मां कोऽपि विश्वासद्रोहेण न वञ्चयति" इति तात्याटोपे चिन्तितवान्।

तात्यटोपेमहोदयस्य आश्रयदाता दुष्टः। सः विश्वासद्रोहं कृतवान्। आंग्लान् रहस्यं सूचितवान्। एकस्मिन् दिने तात्याटोपे उद्याने विश्रान्तिम् अनुभवति स्म। तदा आंग्लसैनिकाः वेषान्तरेण आगत्य तात्याटोपेमहोदयं बन्दीकृतवन्तः।





आंग्लानां विषये स्वकीयं कोपं प्रकटयन् तात्याटोपे उक्तवान्- "मद्विषये विचारणां कर्तुं भवताम् अधिकारः नास्ति। अहम् आंग्लशासनस्य अधीनः न। गृहं प्रविष्टाः चोराः यजमानम् एव बन्धयित्वा, न्यायव्याजेन तद्विषये विचारणां कुर्वंति चेत् किं तत् उचितम् स्यात्? एतत् च न्यायव्यवस्थायाः एव उपहासः" इति।

"आंग्लेयैः तात्याटोपे शूलम् आरोपितः" इति वार्तां श्रुत्वा नानासाहेबः कुपितः। सः अपि आंग्लान् विरुध्य युद्धं कृतवान्। अन्ते तेन आत्मरक्षणार्थं नेपालस्य अरण्येषु प्रवेष्टव्यम् आपतितम्।





सैनिकक्रान्त्यां भागग्राही अन्यः असमानवीरः जगदीशपुरस्य शासकः कुवरसिंहः। सः स्वकीये ७५तमे वयसि अपि शस्त्रं गृहीत्वा रणरङ्गं प्रविष्टवान्। स्वसैनिकान् कूटयुद्धं शिक्षितवान्। ते सैनिकाः वृक्षेषु शिलामध्ये च निलीनाः सन्तः युद्धं कृतवन्तः।

वायुवेगेन सञ्चरतः अश्वस्य उपरि उपविश्य कुवरसिंहः युववीरः इव युद्धं कृतवान्। एकदा युद्धे शत्रुणा प्रयुक्तं गोलकास्त्रं कुवरसिंहस्य दक्षिणहस्ते लग्नम्। तथापि सः व्रणितेन हस्तेन अश्वं चालयन् वामहस्तेन खड्गं गृहीत्वा शत्रुसंहारं कृतवान्।





केषाश्चित् दिनानाम् अनन्तरम् कुवर-
सिंहेन ज्ञातं यत् – व्रणिते हस्ते प्रविष्टं
विषं शरीरे सर्वत्र प्रसरत् अस्ति इति ।
अतः सः गंगा-तीरं गत्वा वामहस्तेन
दक्षिणहस्तं छित्वा गंगायै
समर्पितवान् ।

अल्पे एव काले सः मूर्छितः । अन्य-
दिने मरणम् प्राप्तवान् च ।
तदनन्तरम् तस्य अनुजः अमरसिंहः
सैनायाः नायकत्वं निरूढवान् ।
दुर्गपतनपर्यन्तम् अपि युद्धं कृतवान् ।





जगदीशपुरस्य राजभवने स्त्रियः
शतघ्नीपुरतःस्थित्वा शतघ्नीं ज्वाल-
यित्वा प्राणान् समर्पितवत्यः । अमर-
सिंहः दुर्गतः गुप्तरूपेण निर्गतः ।
एतदनन्तरं सैनिकक्रान्तिः क्रमशः
म्लानवदनताम् आपन्ना ।




# कुशाग्रमतिः

षिराजनगरस्य समीपे एकस्मिन् ग्रामे रजाकः नाम कश्चित् आसीत्। तस्य पितृपितामहाः सर्वेऽपि बहुधनिकाः आसन्। किन्तु रजाकः यदा प्राप्तवयस्कः जातः तदा पितुः सर्वस्वमपि नष्टम्। अस्यामेव चिन्तायां पिता मृतः। रजाकः दरिद्रः सञ्जातः। अन्ते तस्य एकं जीर्णं गृहं एकं लघु गृहं च अवशिष्टम्।

रजाकः एकाकी सन् पिता यस्मिन् जीर्णे गृहे आसीत् तस्मिन् जीर्णगृहे एव आसीत्। पार्श्वे स्थितं लघुगृहं भाटकार्थं दत्तवान्। तस्मिन् गृहे उषितः गृहस्थः प्रतिमासं पञ्चरजतनाणकानि ददाति स्म। रजाकः तद्धनस्य व्ययं न करोति स्म। प्रतिमासं गृहस्थेन दत्तं धनम् एकस्मिन् अश्मपात्रे संस्थाप्य तत्पात्रं गृहसमीपे स्थितायाः वाप्याः समीपे गर्ते निगूढं स्थापयति स्म। यतः रजाकः यस्मिन् गृहे आसीत् तस्य गृहस्य द्वारादिकं किमपि नासीत्।

रजाकगृहस्य किञ्चिद्दूरे एकः कुटीरः आसीत्। तस्मिन् कुटीरे कश्चित् आसीत्। सः बहुअलसः दुर्बुद्धिः च। सः स्नेहव्याजेन रजाकस्य गृहम् आगत्य रजाकः धनं कुत्र निगूहति इति ज्ञातुं बहुधा प्रयतितवान्। बहूनि दिनानि तेन तद्रहस्यं ज्ञातुं न शक्तम्। अतः एकस्मिन् दिने सः अलसः रहस्यस्थले स्थित्वा रात्रिसमये रजाकेन एकस्मिन् अश्मपात्रे धनं विगणय्य स्थापितं दृष्टवान्।

एवं ज्ञात्वा एकस्मिन् दिने रात्रौ रजाकस्य निद्रासमये सः दुष्टः आगत्य निगूहितं धनपात्रं नीतवान्। कुटीरं गत्वा धनं गणितवान्। पात्रे षष्टि रजतनाणकानि आसन्। तेन तस्य बहु सन्तोषः जातः।

अपरेद्युः रजाकः गृहस्थेन दत्तं धनं पात्रे स्थापयितुं वाप्याः समीपे गत्वा पश्यति ! तत्र



पात्रं नास्ति। "एतत् कार्यं तेन दुष्टेनैव कृतम्। यतः सः दुष्टः बहुवारम् अहं कुत्र धनं निगूहामि इति परीक्षितवान्। अतः तेनैव मम धनं अपहृतम्। केनापि उपायेन सः दण्डनीयः" इति रजाकः चिन्तितवान्।

अलसस्तु "अहं षष्टिरजतनाणकानि सम्पादितवान्। मम विषये रजाकः संशयितः न भवेत्। अतः अद्यापि तस्य गृहं गत्वा तस्य समीपे किञ्चित् वार्तालापं कृत्वा आगच्छामि। यदि अहं न गच्छामि तर्हि तस्य संशयः भवेत्" इति विचिन्त्य रजाकस्य गृहम् आगतवान्।

दूरे आगच्छन्तम् अलसं दृष्ट्वा रजाकः तत्क्षणे एव स्वस्य समीपे स्थितानि पञ्चरजत-नाणकानि द्वारे विकीर्णवान्। द्वारे एव अन्तर्मुखम् उपविश्य आत्मगतं कथयन् इव आसीत्- "अद्य अश्मपात्रे एतानि पञ्चरजत-नाणकानि स्थापयामि चेत् आहत्य पञ्चषष्टिरजत-नाणकानि भवन्ति। इतोऽपि पञ्चत्रिंशत्-नाणकानि यदि योजयामि तदा शतं नाणकानि भवन्ति" इति।

अलसः समीपे आगत्य तेन उक्तं सर्वं श्रुतवान्। रजाकः अलसं दृष्ट्वा सद्यः एव पञ्चनाणकानि हस्ते आदाय स्वागतं कृतवान्।

अलसस्य एवं चिन्ता जाता "एतानि पञ्चनाणकानि अपि अपहरणीयानि। रजाकः अश्मपात्रं तथैव अस्ति इति जानाति। एतानि पञ्चनाणकानि तस्मिन् पात्रे यदा स्थापयति तदा तत्रत्यानि नाणकानि गणयति। अतः मया अपहृतं धनपात्रं पूर्वं यथा आसीत् तथैव स्थापयामि चेत्, अद्य तस्मिन् पात्रे पञ्चनाणकानि रजाकः स्थापयति। अपरेद्युः पञ्चषष्टि नाणकानि लभ्यन्ते"।

"किन्तु प्रातःसमये तत् अश्मपात्रं मया तत्र स्थापयितुं कथं शक्यते ? रजाकः अत्रैव भवति किल ? केन व्याजेन तं दूरं प्रेषयामि ?" इति क्षणं विचार्य एकम् उपायं योजितवान्। धनलोभेन एतादृशस्य अलसस्य बुद्धिरपि तीक्ष्णा जाता। अहो धनस्य शक्तिः !

अलसः मित्रं 'मित्र ! आवां बहुदिनेभ्यः मित्रे । मम एका आशा अस्ति । तत् वदामि वा?' इति पृष्टवान् । किमिति रजाकः पृष्टवान् ।

"समीपे स्थितां भोजनशालां गत्वा तत्र उभावपि मिलित्वा भूरिभोजनं कुर्वः । भवतः अद्य रात्रौ समयः अस्ति वा ?" इति पृष्टवान् अलसः ।

"किम् ? एवं पृच्छति भवान् । भवादृशः मित्रं आह्वयति चेत् मम यत्किमपि कार्यं भवतु त्यक्त्वा आगच्छामि । महान् संतोषः" इति रजकः उत्साहं प्रदर्शितवान् ।

तस्यां रात्रौ उभावपि भोजनशालायां मिलितवन्तौ । अलसः भोजनशालायजमानस्य समीपे गत्वा भक्ष्यभोज्यादि सर्वं सज्जीकर्तुम् आदिशत् ।

अनन्तरं बहिरागत्य रजाकं प्रति "भो मित्र ! किमपि मा चिन्तयतु । मया धनम् आनेतुं विस्मृतम् । अतः गृहं गत्वा शीघ्रं धनम् आनयामि" इत्युक्त्वा अलसः गतवान् । गतवन्तं तं दृष्ट्वा रजाकः मनसा एव हसितवान् ।

अलसः कुटीरं गत्वा षष्टिनाणकयुक्तं धनपात्रम् आदाय राजकस्य गृहं गत्वा यथास्थानं स्थापयित्वा शीघ्रं भोजनशालाम् आगतवान् । भूरिभोजनं समाप्तम् । 'मया कृतेन उपायेन रजाकः वञ्चितः' इति अलसः, तथैव रजाकोऽपि "मया अलसः वञ्चितः" इति चिन्तयन्तौ उभावपि बहुसन्तोषेण गृहं गतवन्तौ ।

रजाकः भोजनशालातः आगत्य तत्क्षणमेव



अलसेन स्थापितं पात्रं अन्यत्र स्थापयित्वा निद्रितवान् ।

अलसः अपि स्वकुटीरे धनविषयकं स्वप्नं पश्यन् एव सुखेन निद्रितवान् । परेद्युः सूर्योदयात् प्रागेव अलसः सन् अपि उत्थाय मुखमार्जनादिकं कृतवान् । 'अद्य रात्रौ पञ्चषष्टि-नाणकानि लभ्यन्ते' इति मनसि आलोचयन् कुटीरं परितः सन्तोषेण अटितवान् ।

ततः अष्टवादनसमये उपाहारमन्दिरं गतवान् । तत्र विविधानि भक्ष्याणि भक्षितवान् । मधुरं पेयं च पीतवान् । रात्रौ धनं लभ्यते इति सर्वं धनम् अपि उपाहारमन्दिरे एव व्ययितवान् । उपाहारमन्दिरस्य यजमानस्य अपि आश्चर्यं- "कथम् अद्य एषः बहुधनं व्ययीकरोति ।" इति ।

उपाहारमन्दिरतः प्रस्थाय अलसः अटन् उद्यानम् एकं प्रविश्य वृक्षस्य छायायाम् उपविष्टवान् । तत्रापि रजतनाणकानि एव चिन्तयन् अन्तःसुखम् अनुभवन् आसीत् । यदा मध्याह्नः जातः तदा ततः प्रस्थाय गृहमागत्य किञ्चित् कालं कटे शयितवान् ।

शयितस्य लघु निद्रा आगता । यदा सः जागरितः तदा सूर्यः अस्तं गच्छन् आसीत् । अलसः शीघ्रम् उत्थाय बहिः आगत्य सम्पूर्णं सूर्यास्तं प्रतीक्षमाणः स्थितवान् ।

अनन्तरं रात्रौ अलसः अश्मपात्रं चोरयितुं रजाकस्य गृहम् आगतवान् । तदा तस्य महान् सन्तोषः । यतः अश्मपात्रे इदानीं पञ्चषष्टि रजत-नाणकानि सन्ति' इति ।

अलसः पूर्वं यत्र अश्मपात्रम् आसीत् तत्रैव अन्वेषणं करोति स्म । तदा तस्यपृष्ठभागे कोऽपि हसितवान् । हासं श्रुत्वा अलसः परिवृत्य पश्यति, तत्र रजाकः अस्ति । 'भूरिभोजनम् बहु समीचीनम् आसीत् । धन्यवादं वक्तुम् आगतवान्' इति रजाकः हसन् एव उक्तवान् ।

तत्क्षणे एव अलसः बहिः धावितवान् । अनन्तरं तम् अलसं रजाकः कदापि न दृष्टवान् ।





# पिशाचः देवता च

पूर्वकाले वरदेश्वरग्रामस्य प्रवेशस्थाने ग्रामदेवतायाः एकः आलयः आसीत् । तस्य देवालयस्य उपायनरूपेण प्राप्ता महती सम्पत्तिः आसीत् । देवतायाः बहुमूल्यानि आभरणानि अपि बहूनि आसन् । प्रतिदिनं बहवः भक्ताः देवालयं आगच्छन्ति स्म । अतः देवालयः सर्वदा जनसमूहेन कोलाहलभरितः भवति स्म ।

एकस्मिन् दिने सन्ध्यासमयः आसीत् । तदा ग्रामदेवता आलयतः बहिः आगत्य तत्र एकस्मिन् कोणे स्थितस्य निम्बवृक्षस्य उपरि उपविष्टवती । निम्बवृक्षतः किञ्चिद्दूरे एकं शिथिलं दुर्गम् आसीत् । दुर्गस्य पार्श्वे स्थिते तिन्त्रिणीवृक्षे एकः पिशाचः वसति स्म ।

सः पिशाचः ग्रामस्थजनानां कदापि किमपि अहितं न करोति स्म । अतः ग्रामदेवतायाः मनसि पिशाचस्य विषये आदरभावः एव आसीत् । तेन कारणेन ग्रामदेवता पिशाचेन सह तदा तदा वार्तालापं करोति स्म ।

अद्य अपि ग्रामदेवता तिन्त्रिणीवृक्षस्थपिशाचेन सह वार्तालापम् आरब्धवती। 'ग्रामस्थाः भक्ताः अतिवैभवेन मां पूजयन्ति, भक्त्या प्रभूतं उपायनादिकं यच्छन्ति' इति महता अभिमानेन सन्तोषेण च पिशाचस्य पुरतः वर्णितवती ।

तत्सर्वं श्रुत्वा पिशाचः स्मयमानः "अम्ब, भवती अतीव मुग्धगुणान्विता । मानवाः महावञ्चकाः इति भवती न जानाति । ते न केवलं परस्परं वञ्चयन्ति अपि तु देवतानां पुरतः अपि भक्तिनटनं कृत्वा ताः अपि वञ्चयन्ति । भवत्याः नामग्रहणद्वारा भवत्याः एव सम्पत्तेः अपहर्तारः अनेके महाजनाः अस्मिन् ग्रामे सन्ति । तान् अहं जानामि" इति उक्तवान् ।

तानि वचनानि श्रुत्वा ग्रामदेवता क्रुद्धा अभवत् । सा पिशाचं दृष्ट्वा "मानवानां विषये भवतः महान् द्वेषः अस्ति इति प्रतिभाति ।

"श्रीमाता"



अत एव एवं वदति। मम भक्ताः मम आज्ञायाः उल्लङ्घनं कदापि न कुर्वन्ति इति सोदाहरणं निरूपयिष्यामि'' इति उक्तवती।

तस्मिन् समये एकः ग्रमस्थः अञ्जलिबद्धः भूत्वा देवालयस्य प्रदक्षिणं करोति स्म। सः एकः महामान्त्रिकः भूतवैद्यः च आसीत्।

तं दर्शयित्वा पिशाचं प्रति ''एषः बहुकालादारभ्य मां भक्त्या पूजयति। वराकः एषः अतिदरिद्रः। अद्य रात्रौ अस्य उपरि अनुग्रहं कर्तुम् इच्छामि'' इति उक्तवती।

''अस्तु! तथा एव करोतु। एषः कीदृशः भक्तः इति परीक्षां कर्तुं मम अपि अवकाशं ददातु। अहम् अपि यथाशक्ति एतस्य साहाय्यं करोमि'' इति पिशाचः अवदत्।

तस्यां रात्रौ ग्रामदेवता भूतवैद्यस्य स्वप्ने प्रत्यक्षा भूत्वा ''भोः भक्तवर! अहं भवतः अनुग्रहार्थम् आगता अस्मि। श्वः प्रातः भवान् मम देवालयस्य धर्मकर्तारं पश्यतु'' इति उक्त्वा अदृश्या जाता। तस्मिन्नेव समये सा धर्मकर्तुः स्वप्ने अपि दर्शनं दत्त्वा भूतवैद्यं देवालयस्य आयव्यय-निर्वहण-कार्ये नियोजयतु इति आज्ञापितवती।

प्रातः भूतवैद्यः देवालयस्य धर्मकर्तुः दर्शनार्थं गतवान्। धर्मकर्ता तु किमपि अजानन् इव नटनं कुर्वन्, स्वप्नविचारं श्रुत्वा आश्चर्यं प्रकटयन् ''अरे! ग्रामदेवता एवंरीत्या उक्तवती वा? हन्त! सा माता किञ्चित् पूर्वमेव मम समीपे न उक्तवती। आयव्ययनिर्वहणरूपं तम् उद्योगम् इदमिदानीम् एव कस्मैचित् ददामि इति मया प्रतिज्ञातं किल?'' इति उक्तवान्।

भूतवैद्यः निराशया दुःखितः स्वकीयं दौर्भाग्यं निन्दन् ततः निर्गतवान्। तस्मिन् एव सायंकाले धर्मकर्ता देवालयं गत्वा, देवतायाः पुरतः साष्टाङ्गनमस्कारं कृत्वा ''मातः, रात्रौ स्वप्नकाले भवत्याः समीपे वक्तुं यावत् मया मुखम् उद्घाटितं, तावत् भवती तिरोभूता। अहं तु ह्यः एव कस्मैचित् वचनं दत्तवान् अस्मि। भवत्याः भक्ताः कदापि वचनभ्रष्टाः न भवन्ति किल? इदानीं मया किं करणीयम्? भवती एव वदतु!'' इति अश्रूणि विमुञ्चन्

उक्त्वा निर्गतवान् ।

तस्य अश्रूणि निर्मलानि इति भावयन्ती ग्रामदेवता अतीव आर्द्रचित्ता जाता। मया पूर्वमेव वक्तव्यम् असीत् इति सा चिन्तितवती। धर्मकर्ता तु तस्याः पुरतः कपटनाटकम् अभिनीतवान् इति विषयं सा न ज्ञातवती। देवालयस्य सम्पत्तिम् अपहर्तुम् अवकाशः नष्टः भवति इति कारणात् सः एवं कृतवान्।

एतत्सर्वं तिन्त्रिणीवृक्षस्य पिशाचः लक्षयन् एव आसीत्। तस्यां रात्रौ स पिशाचः भूतवैद्यस्य स्वप्ने गत्वा "भोः तात, यद्यपि भवान् न मम भक्तः, तथापि भवतः किञ्चित् साहाय्यं कर्तुम् इच्छामि। अद्य अहं ग्राममुख्यस्य पुत्रीं प्रविशामि। न कोऽपि अन्यः मान्त्रिकः तस्याः शरीरतः मां निष्कासयितुं शक्नोति। यदा भवान् आगच्छति, तदा तत्क्षणम् एव अहं तां त्यक्त्वा निर्गच्छमि। तेन भवतः जनप्रियता तथा धनम् अपि लभ्यते। भवतः सन्तोषेण ममापि सन्तोषः भवति" इति उक्तवान्।

भूतवैद्यः सन्तोषेण अङ्गीकृतवान्। परेद्युः ग्राममुख्यस्य पुत्री भूतग्रस्ता जाता इति ग्रामजनाः परस्परं वदन्ति स्म। भूतवैद्यः 'दिनद्वयानन्तरं तत्र गन्तव्यम्' इति मनसि निश्चितवान्।

पिशाचः भूतवैद्यस्य साहाय्यं करोति इति ग्रामदेवता ज्ञातवती। तदा सा पुनः भूतवैद्यस्य स्वप्नं प्रविष्टवती। तां दृष्ट्वा भूतवैद्यः "अम्ब,



धर्मकर्तुः द्वारा दरिद्रस्य मम अवमानं कारितवती। भवत्याः इदं कार्यं युक्तं वा?" इति पृष्टवान्।

ग्रामदेवता वैद्यं प्रति "एकवारं किञ्चित् प्रमादः सञ्जातः। किन्तु अस्मिन् अवकाशे निश्चयेन भवतः कल्याणं करोमि। सः तिलकधारी गोविन्दगुप्तः मम भक्तः। श्वः सः अवश्यं प्रभूतं धनं दास्यति। किन्तु एकं विषयं सम्यक् स्मरतु। यदि भवान् मम यथार्थभक्तः अस्ति, तर्हि भवता अन्यदेवतायाः साहाय्यं न याचनीयम्" इति उक्तवती।

अनन्तरं ग्रामदेवता गोविन्दगुप्तस्य स्वप्ने दर्शनं दत्त्वा तेन कर्तव्यं कार्यं सूचितवती। गोविन्दगुप्तः भक्त्या नमस्कृत्य 'यथा भवती

आज्ञापयति, तथैव करोमि" इति उक्तवान्।

परेद्युः भूतवैद्यः यदा आगतवान् तदा तं दृष्ट्वा क्रोधेन "आगतवान् वा? अत्र एकैकस्यापि नाणकस्य कृते मया कीदृशः परिश्रमः अनुभूतः इति ग्रामदेवता कथं जानाति? एतादृशः दानधर्मादिसम्प्रदायः अस्माकं कुले एव कदापि नास्ति। सा देवता सलीलम् आज्ञापितवती, भवान् सुखेन आगतवान्। देवतायाः आज्ञा न उल्लङ्घनीया इति कृत्वा इदम् एकं नाणकं ददामि। सन्तोषेण गृहीत्वा गच्छतु" इति गोविन्दगुप्तः उक्त्वा भूतवैद्यस्य हस्ते एकं नाणकं दत्तवान्।

भूतवैद्यः रोषेण तत् नाणकं तत्रैव क्षिप्त्वा ततः निर्गतवान्।

अनन्तरं गोविन्दगुप्तः समीचीनतया स्नानादिकं समाप्य, ललाटे तिलकधारणमपि कृत्वा देवालयं गतवान्। तत्र देवतायाः पुरतः साष्टाङ्गनमस्कारं कृत्वा "अम्ब, किं वा वदामि? मम जीवितं तृणादपि हीनतरं जातम्। मम पत्नी महती साध्वी इति विश्वासेन मम सम्पूर्णां सम्पत्तिं तस्याः हस्ते अहं अर्पितवान्। ह्यः रात्रौ भवत्याः आज्ञां श्रुत्वा सा चण्डी इव माम् एव गृहतः निष्कासयामि इति कोलाहलं कृतवती। क्षाम्यतु अम्ब, भवत्याः आज्ञां निर्वोढुम् अपि अहम् असमर्थः अस्मि" इति उक्त्वा गृहं प्रत्यागतवान्।

ग्रामदेवता तस्य विषये करुणया "एतस्य तु मम विषये भक्तिः अस्ति एव। गृहे पत्नी



एव विरोधं करोति चेत् किं वा कर्तुं शक्यते ?'' इति चिन्तितवती ।

भूतवैद्यः दिनचतुष्टयानन्तरं ग्राममुख्यस्य गृहं गत्वा, तस्य पुत्र्याः शरीरस्थं पिशाचं निष्कासयामि इति उक्तवान् । तावत्पर्यन्तं अनेकैः मान्त्रिकैः यत् आसाध्यम् आसीत्, तत् भूतवैद्यः लीलया साधितवान् । तेन सन्तुष्टः ग्राममुख्यः प्रभूतं बहुमानं दत्त्वा भूतवैद्यं प्रेषितवान् । ''महासमर्थः भूतवैद्यः'' इति कीर्तिः अपि तेन सम्प्राप्ता ।

पुनः पिशाचः भूतवैद्यस्य स्वप्ने पूर्वसूचनां दत्त्वा अन्यस्य ग्रामस्य भूस्वामिपुत्रीं प्रविष्टवान् ।

भूतवैद्यस्य स्वविषये यादृशी भक्तिः अस्ति, तदपेक्षया पिशाचस्य विषये अधिकतरा भक्तिः अस्ति इति ज्ञात्वा असन्तुष्टा ग्रामदेवता पुनः रात्रौ भूतवैद्यस्य स्वप्ने दर्शनं दत्तवती ।

भूतवैद्यः स्वप्ने एव तां नमस्कृत्य 'अम्ब ! भवत्यै भवत्याः उपकाराय च अपि नमो नमः । यथाकथञ्चित् पिशाचस्य अनुग्रहेण समीचीनतया एव जीवन् अस्मि । कृपया भवत्याः प्रवेशः अत्र मास्तु'' इति उक्तवान् ।

अवहेलनयुक्तं तस्य वचनं श्रुत्वा अपि ग्रामदेवता यथाकथञ्चित् शान्तिम् अवलम्ब्य ''पश्यतु भोः, एषः एव अन्तिमः अवकाशः । एषु दिनेषु सः शिवरामदासः रामनाम लिखन् अस्ति किल, तस्य समीपं गच्छतु । सः महान् धनिकः । तस्य सम्पत्तेः कोऽपि उत्तराधिकारी अपि नास्ति । तस्य समीपं गत्वा अहं सूच-





यामि। किन्तु इतः परं पिशाचस्य सम्बन्धं त्यजामि इति वचनं ददातु'' इति पृष्टवती।

भूतवैद्यः अनिच्छन् अपि वचनं दत्त्वा, परेद्युः शिवरामदासस्य गृहं गतवान्। तस्मिन् समये शिवरामदासः महता एकाग्रचित्तेन राम-नामलिखन् आसीत्। किञ्चित् तिष्ठतु इति मौनेन एव भूतवैद्यं सूचितवान्। किञ्चित् कालानन्तरं किमपि विचित्रं पश्यन् इव भूत-वैद्यं दृष्ट्वा ''रात्रौ ग्रामदेवता भवतः विषयम् उक्तवती भोः। तस्याः देवतायाः पूजया मम किञ्चिदपि प्रयोजनं न अभवत्। एतद्विषयं तस्याः समीपे वक्तुं शक्यते वा ? यदा राम-नाम लेखनं मया गृहीतं तदारभ्य सुखशान्तिम् अनुभवन् अस्मि। एतत् लेखनं यदा समापयामि, तदा महत् पुण्यं सम्पादितं भवति। अनन्तरं कस्यचित् मम प्रीतिपात्रस्य हस्ते मम सम्पत्तिं दत्त्वा अहं मोक्षचिन्तनं करिष्यामि। एषा एव मम इच्छा'' इति कथितवान्।

इत्थं पुनः अवमानितः भूतवैद्यः दुःखेन गृहं प्रति प्रस्थितः। तस्य मार्गे भूस्वामिभृत्यः तं दृष्ट्वा, भूस्वामिपुत्र्याः विषयं कथितवान्। भूतवैद्यः तेन सह एव भूस्वामिगृहं गतवान्। तत्र भूस्वामी आदरपूर्वकं तस्य सत्कारं कृत्वा पुत्र्याः प्रकोष्ठं प्रेषितवान्।

भूस्वामी प्रकोष्ठं प्रविष्य यदा द्वारं पिहितवान् तदा भूस्वामिपुत्र्याः शरीरे स्थितः तिन्त्रिणीवृक्ष-वासी पिशाचः करताडनं कृत्वा ''नहि। एनां त्यक्त्वा अहं न गच्छामि। अत्र स्वादुतमं भोजनं मृदुमधुरं शयनम् अस्ति। अहम् अत्रैव तिष्ठामि। भवान् तूष्णीं गच्छतु'' इत्युक्त्वा अट्टहासं कृतवान्।

पिशाचस्य वचनं श्रुत्वा भूतवैद्यस्य मस्तकस्य उपरि वज्रघातः अभवत्। यदि अहं पिशाचम् न निष्कासयामि तर्हि भूस्वामी मम शिरच्छेदनं कारयेत्। एषः पिशाचः तु न गच्छामि इति आग्रहं करोति एतेन कथं विमोचनम् इति चिन्तयन् सः अतीव भीतः अभवत्। अद्य पूजावस्तूनि आनयामि इति उक्त्वा गृहं प्रत्यागतवान्।

तस्यां रात्रौ निद्राहीनः भूतवैद्यः चिन्तया

एव बहुकालं यापितवान् । तृतीययामे यदा किञ्चित् निद्रामग्नः जाता, तदा ग्रामदेवता स्वप्ने दर्शनं दत्त्वा 'तस्य पिशाचस्य वचने विश्वासं कृत्वा भवान् एतादृशीम् अवस्थां प्राप्तवान् । अस्तु, इदानीम् एवं करोतु" इति एकम् उपायं सूचयित्वा सा अदृश्या अभवत् ।

परेद्युः सः एकं काचकलशं गृहीत्वा भूस्वामीगृहं गतवान् काचकलशेन सह पुनः स्वसमीपम् आगतं तं दृष्ट्वा पिशाचः "किमिदं" इति पृष्टवान् । भूतवैद्यः अतीव मुग्धः इव मुखभावं प्रकटयन् "ह्यः रात्रौ मम विद्यागुरवः घोराटकाः विन्ध्यारण्यप्रान्ततः प्रत्यागताः । ममभक्त्या प्रीताः ते एतं काचकलशं बहुमानरूपेण मह्यं दत्तवन्तः । अस्य अन्तः यः आन्दोलः अस्ति,तस्मिन् यः उपविशति तेन अपेक्षितं रूपं लभ्यते । किन्तु वयं मानवाः अस्मिन् अल्पे कलशे गन्तुं कथं वा शक्नुमः ? एतेन किं वा प्रयोजनं भवेत्, इति भवन्तं प्रष्टुम् अहम् अत्र आगतवान् इति" उक्तवान् ।

तत्क्षणं पिशाचः भूतवैद्यस्य हस्तं गृहीत्वा "एतेन महत्प्रयोजनम् अस्ति । सुन्दररूपं प्राप्तुं बहुकालादारभ्य अहं सर्वदा ध्यायन् अस्मि । एकवारं अस्य काचकलशस्य अन्तः गत्वा शय्यान्दोले उपवेशनस्य अवकाशं ददातु" इति वदन् पिशाचः धूमरूपेण काचकलशे प्रविष्टवान् ।

भूतवैद्यः सद्यः एव कलशं पिधानेन दृढं आच्छादितवान् । 'महती वञ्चना' ! इति पिशाचः निन्दितवान् । भूतवैद्यः हसन् "भूस्वामिपुत्रीं न त्यजामि" इति भवतापि वञ्चनाकृता । अतः भवतः मारणम् वञ्चनाया एव । एतत्सर्वं ग्रामदेवतायाः अनुग्रहेण जातम्" इति उक्त्वा तं काचकलशं गर्ते स्थापयित्वा मृत्तिकया पिहितवान् । तुष्टः भूस्वामी तं बहुधनैः सम्मानितवान् ।

तदा ग्रामदेवता एकं वास्तववृत्तान्तं ज्ञातवती । सर्वे मानवाः न सज्जनाः किन्तु मानवेषु सज्जनता, दुर्जनता इति द्वयमपि अस्ति इति ।



# वाणिज्यरहस्यम्

एकस्मिन् ग्रामे भूषणः नाम एकः वणिक् आसीत्। राहुलः तस्य स्नेहितः।

एकदा भूषणस्य वाणिज्यार्थं धनस्य अतीव आवश्यकता अभवत्। अतः सः स्वीयं अश्वशकटं विक्रीतवान्। राहुलः तं शकटं गृहीत्वा शतंरूप्यकाणि दत्तवान्। किन्तु शकटस्य मूल्यम् अतीव न्यूनं जातम् इति भूषणस्य मनसि सन्देहः जातः। अतः सः एकसप्ताहतः पूर्वमेव द्विशतंरूप्यकाणि दत्त्वा तं शकटं पुनः स्वयमेव क्रीतवान्।

किञ्चित्कालानन्तरं राहुलः अवश्यकार्यार्थं नगरं गन्तुं निश्चितवान्। तदर्थं सः त्रिशतं रूप्यकाणि दत्त्वा शकटं पुनः क्रीतवान्।

एवंरीत्या तस्य अश्वशकटस्य तयोः मध्ये एव पुनः पुनः क्रयणं विक्रयणं च भवति स्म।

यदा तस्य मूल्यं अष्टशतरूप्यकाणि आसीत् तदा अन्यग्रामस्य कश्चित् वणिक् तत्र आगत्य सहस्ररूप्यकाणि दत्त्वा भूषणस्य हस्ततः शकटं प्राप्य स्वग्रामं गतवान्।

एतां वार्तां ज्ञात्वा राहुलः भूषणस्य समीपम् आगत्य "रे भूषण! भवान् महान् अज्ञः। वाणिज्यव्यवहारस्तं भवान् न जानाति। अश्वशकटेन भवतः मम च तदा तदा धनलाभः भवति स्म। तादृशं शकटं दत्त्वा भवान् नूनं मूर्खः जातः" इति भर्त्सितवन्।






शौनकादिमुनयः सूतमहर्षिं प्रार्थितवन्तः– ''मुनीन्द्र ! विष्णुः कृष्णस्य स्वरूपेण गोलोके निवसति इति वयं श्रुतवन्तः । एतस्य कृष्णस्य वृत्तान्तं समग्रं श्रोतुम् इच्छामः । कृपया वदतु'' इति ।

सूतमुनिः कृष्णकथां वक्तुम् आरब्धवान् – ''सत्यलोकस्य उपरि गोलोकः अस्ति । तत्र सर्वदा नक्षत्राणि प्रकाशन्ते । कौमुदी विराजते च । तत्र विष्णुः गाढनीलवर्णसहितः सन् कृष्णः इति नाम्ना विलसति । तस्मिन् लोके पुण्या विरजा-नदी प्रवहति । तस्याः तीरे तुलसीवने उपविश्य कृष्णः वेणुं वादयति । वेणुवादनतः उत्पन्नः मञ्जुलध्वनिः एव राधास्वरूपेण प्रत्यक्षः अस्ति ।

प्रकृतिरूपिणी राधा पुरुषरूपः कृष्णः च सर्वदा सहैव निवसतः । राधां विना कृष्णः नास्ति ।

कृष्णं विना राधा न जीवति । सुदामः सदाकालं कृष्णस्य सेवायां निरतः अस्ति ।

राधादेव्याः शरीरतः असङ्ख्याः गोपिकाः समुत्पन्नाः । विरजानदी स्त्रीवेषं धृत्वा वृन्दा-देव्याः रूपेण प्रेमपूर्वकं कृष्णस्य आराधनं करोति स्म ।

एकदा कृष्णः राधा च परस्परम् अनुराग-बद्धौ एकान्ते उपविष्टौ । तदा कृष्णम् अन्वि-ष्यन्ती विरजा तत्र आगता । कुपिता राधा ''भवती भूलोके जन्म प्राप्नोतु'' इति शापं दत्तवती । 'एवं विरजाम् उद्दिश्य शापदानम् अनुचितम्' इति सुदामः राधां विवेकं बोधितवान् ।

''विष्णुलीला-कलियुगे''



कुपिता राधा सुदामम् अपि शप्तवती– ''भवान् अपि राक्षसरूपेण भूलोके जन्म प्राप्नोतु'' इति।

राधया शप्ता विरजा भूलोके राजकुमारी भूत्वा तुलसी, वृन्दा इति नाम प्राप्तवती।

एकदा देवेन्द्रः कैलासं गतवान्। तत्र शिवः एव रूद्रभटरूपेण द्वारपालनं करोति स्म। एतत् अजानन् इन्द्रः तस्य उपरि वज्रायुधस्य प्रयोगं कृतवान्। तदा शिवः स्वकीयं वास्तविकं रूपं धरन् तृतीयनेत्रम् उन्मीलितवान्।

तदा भीतः देवेन्द्रः शिवस्य पादयोः पतित्वा आत्मनः रक्षणं प्रार्थितवान्। तदानीं शान्तः शिवः क्रोधं संहरन्, तृतीयनेत्रतः उत्पन्नं क्रोधाग्निं समुद्रे क्षिप्तवान्। तस्मिन् एव समये राधादेव्याः शापवशात् सुदामः गोलोकतः अग्निक्षेत्रे पतितः, समुद्रे बालकरूपेण जन्म प्राप्तवान्। तेन शिरसि श्वेतः शङ्खः धृतः आसीत्।

कृष्णः सुदामः च मैत्र्या अभिन्नौ। कृष्णः स्वसहचरस्य सुदामस्य विषये अनुकम्पवान् आसीत्। अतः सः तस्मै बालकाय अभेद्यं कृष्णकवचम् अनुगृहीतवान्।

तस्मिन् काले दम्भनामकः राक्षसः पुत्रप्राप्तये समुद्रतटे घोरं तपः आचरन् आसीत्। एषः दम्भः समुद्रे प्लवमानं बालकं दृष्ट्वा सन्तुष्टः। तं बालकं गृहं नीत्वा पुत्ररूपेण पोषितवान्। सः बालकः जलन्धरनाम्ना आहूतः। तस्य अपरं नाम शङ्खचूडः इति।

तुलसी विष्णुम् एव पतिं मन्यमाना विष्णोः आराधने तत्परा तपसि लीना आसीत्। एकदा जलन्धरः तपस्यन्तीम् एतां दृष्टवान्।

जलन्दरः साक्षात् तुलसीदेव्याः पितुः धर्मध्वजस्य समीपं गत्वा स्वकीयाम् इच्छां प्रकटितवान्- ''अहं तुलसीदेवीं परिणेतुम् इच्छामि'' इति।

धर्मध्वजः एतत् अङ्गीकृतवान्। अल्पे एव काले तुलसीदेवी-जलन्धरयोः विवाहः सम्पन्नः। तुलसीदेवी तु जलन्धरम् एव देवं मन्यमाना भक्त्या पतिसेवां करोति स्म।



जलन्धरः तुलसीदेव्याः सौन्दर्येण आकृष्टः आसीत्, सत्यम् । किन्तु तामसगुणयुताय तस्मै तुलसीदेव्याः सात्विकगुणाः न अरोचन्त । अतः सः विवाहनन्तरं कदापि तुलसीदेवीं प्रीत्या न दृष्टवान् ।

तुलसीदेवी तु सर्वदा पतिदेवं स्मरन्ती तस्य चरणचिह्नानि एव पूजयन्ती आसीत् । जलन्धरः राक्षसानां सम्राट् जातः । सः अजेयस्य कृष्णकवचस्य प्रभावेण त्रिषु लोकेषु अपि विजयं प्राप्तवान् ।

एवं स्थिते, कदाचित् कलहप्रियः नारदः जलन्धरसमीपं गत्वा पार्वतीदेव्याः अनुपम-सौन्दर्यस्य वर्णनं कृतवान् । शिवं युद्धार्थम् आह्वयन् उक्तवान्— "विना विरोधं पार्वतीम् मह्यम् अर्पयतु । अथवा युद्धेन भवन्तं पराजित्य अहम् एव तां नेष्यामि" इति ।

एतेन कुपितः शिवः जलन्धरस्य उपरि त्रिशूलं प्रयुक्तवान् । जलन्धरस्य वक्षस्थलेन अवरुद्धः त्रिशूलः अधः पतितः ।

एतत् दृष्ट्वा भीता पार्वती राधादेवीं शरणं गतवती । तदा राधादेवी पार्वतीम् उक्तवती— "जलन्धरः शिवस्य नेत्राग्निना एव समुत्पन्नः । अतः केवलं शिवेन एकेन तस्य मारणं शक्यम् । किन्तु जलन्धरेण विष्णुकवचं प्राप्तम् अस्ति । यावत् विष्णुकवचं तस्य समीपे तिष्ठति, तावत् तस्य मारणम् अशक्यम् एव । तुलसीदेव्याः पातिव्रत्यम् अपि तं रक्षति । तथापि विष्णोः मायाम् अतीतः कोऽपि विषयः नास्ति किल ? अतः विष्णुम् एव शरणं गच्छतु । सः एव परिहारमार्गम् उपदिशति" इति ।

पार्वत्या प्रार्थितः विष्णुः वृद्धब्राह्मणवेषं धृत्वा जलन्धरसमीपं गतवान् । तं बहुधा प्रशंसितवान्- "भवान् तु वीराग्रेसरः । एतादृशस्य भवतः कृते पुनः कवचं किमर्थम् ? दुर्बलशरीराय मह्यं तत् दत्तम् चेत् अहं किञ्चित्-कालं सुखं जीविष्यामि" इति ।

प्रशंसया सन्तुष्टः जलन्धरः उक्तवान्- "भवतः वचनं सत्यम् । समर्थस्य मम कृष्णकवचं किमर्थम् ?" इति । एवं वदन् सः ब्राह्मणाय कृष्णकवचं दत्तवान् ।



मायाप्रभावत: तुलसीदेवी आगतं विष्णुम् एव पतिं चिन्तितवती । "बहुकालात् अनन्तरम् अन्त:पुरम् आगत:" इति सा बहु सन्तुष्टा । भ्रमाधीना सा पतिरूपेण: स्थितस्य विष्णो: चरणयो: प्रणामं कृतवती । तस्मिन् एव समये शिव: त्रिशूलेन जलन्धरस्य शिरश्छेदं कृतवान् । तत: उत्प्लुतं शिर: तुलस्या: हस्तं स्पृशत् भूमौ पतितम् । तदा विष्णु: स्वकीयं निजरूपं धृतवान् ।

एतत् दृष्ट्वा तुलसी आश्चर्यचकिता । कोपेन सा शापं दत्तवती- "हे विष्णो ! भवान् मां वञ्चितवान् । एतदपराधकारणत: भवान् शिलास्वरूपं प्राप्नोतु । "

विष्णु: मन्दहासं प्रकटयन् उक्तवान्- "अये तुलसीदेवि ! भवत्या: शापम् अहं सन्तोषेण अङ्गीकरोमि । भवत्या: पति: जलन्धर: अन्य: न, मदंशसम्भूतस्य सुदामस्य स्वरूपी एव स: । अहं कृष्णसुदामयो: रूपेण भूलोके निवसामि ।

विवाहत: पूर्वं भवती मां पतिरूपेण प्राप्तुं तप: आचरितवती आसीत् । विवाहानन्तरं पातिव्रत्यधर्मम् आचरन्ती स्त्रीणाम् आदर्शा सञ्जाता । इत:परं भवती पातिव्रत्यद्योतकस्य तुलसीसस्यस्य रूपेण भूलोकम् अवतरिष्यति । मम अत्यन्तं प्रीतिपात्रं च भविष्यति । अहं तु शालग्रामरूपेण भवत्या: सान्निध्ये स्थास्यामि ।"

एतदनन्तरं विष्णु: जलन्धररूपं धृत्वा तुलसीदेव्या: अन्त:पुरं प्रविष्टवान् । जलन्धर: तु कैलासे शिवेन सह घोरं युद्धं कुर्वन् आसीत् ।

पूर्वं कदाचित् गण्डकी नाम देववेश्या भूलोकम् आगत्य विष्णुं घोरतपसा पूजितवती । प्रसन्न: विष्णु: तां वरं प्रष्टुम् उक्तवान् । तदा गण्डकी विनम्रा भूत्वा विष्णुं प्रार्थितवती- "भगवन् ! यथा जना: स्वगृहेषु रत्नादिनिधीन् गुप्तरूपेण स्थापयन्ति, तथैव अहम् अपि भवन्तम् आत्मनि गोपयितुम् इच्छामि" इति ।

विष्णु: उक्तवान्- "भवती भूलोके नदीरूपेण प्रवहतु । अहं शालग्राम: भूत्वा भवत्या: अन्त: निवसामि ।" इति । अनन्तरं गण्डकी नदीरूपेण भूलोकम् अवतीर्णा ।



अनन्तरं विष्णुः शालग्रामरूपेण गण्डकी-नद्याम् अवतारं कृतवान्। तुलसी सस्यरूपेण भूलोकम् अवतीर्णा।

एतदनन्तरं गण्डकीनद्यां केवलं प्राप्यमाणां शालग्रामशिलां तुलसीसस्यस्य मूले स्थापयित्वा जनाः पूजां कर्तुम् आरब्धवन्तः।

तुलसीदलानि शलग्रामम् अलङ्कुर्वन्ति स्म।

कदाचित् महर्षीणां मध्ये एका चर्चा उत्पन्ना "त्रिमूर्तिषु कः श्रेष्ठः" इति। निर्णयं कर्तुम् अशक्ताः ते एतदर्थं भृगुमहर्षिं प्रेषितवन्तः। भृगुः प्रथमं सत्यलोकं गतवान्। तत्र ब्रह्मा सरस्वत्याः वीणावादने मग्नः आसीत्। अतः सः भृगुमहर्षेः आगमनं न ज्ञातवान्।

अनन्तरं भृगुः कैलासं गतवान्। शिवः तत्र पार्वत्या सह नृत्यं कुर्वन् आसीत्। नृत्यावेगेन वशीकृतः शिवः भृगुमहर्षिं अनादरभावेन दृष्टवान्।

द्वयोः स्थलयोः अपि अपमानितः भृगुः कोपाविष्टः जातः। भृगुमहर्षेः पादे एकं विशिष्टं नेत्रम् आसीत्। अतः सः गर्वितः अपि आसीत्। कुपितः एव सः वैकुण्ठं प्रविष्टवान्। तस्मिन् समये विष्णुः लक्ष्मीदेव्या सह शेषशय्यायां विराजमानः आसीत्। एतत् दृष्ट्वा भृगुमहर्षेः कोपः प्रज्वलितः। सः असहनीयकोपेन विष्णोः वक्षस्थले पादप्रहारं कृतवान्।

तदा विष्णुः झटिति उत्थाय महर्षिं नमस्कृतवान्। महर्षेः चरणौ स्वशिरसि स्थापयन् नम्रतापूर्वकम् उक्तवान्- "महात्मन्! भवदीयौ सुकोमलौ एतौ चरणौ मदीयस्य कठिनतमस्य आघातेन कीदृशीं पीडाम् अनुभूतवन्तौ" एवं वदन् विष्णुः भृगुमहर्षेः पादौ मृदु आमृशन् पादतले स्थितं नेत्रं अङ्गुल्या नोदितवान्। एतेन भृगोः अहङ्कारः समग्रः अपगतः। सः विष्णोः स्तुतिं कुर्वन् भूलोकं गतवान्। तत्र सर्वान् मुनीन् विष्णुमहत्वं बोधितवान्।

यदा लक्ष्मीः विष्णोः वक्षस्थलम् आलम्ब्य स्थितवती आसीत् तदा एव भृगुः तत्र पादेन



ताडितवान् आसीत् । एतत् आपमानकरम् इति लक्ष्मीः चिन्तितवती । 'मुनेः पादप्रहारेण विष्णुः अपवित्रः सञ्जातः' इत्यपि सा चिन्तितवती । एवं चिन्तयन्ती सा वैकुण्ठं परित्यज्य भूलोकम् आगत्य तपसि लीना जाता ।

लक्ष्मीम् अन्विष्यन् विष्णुः श्रीनिवासनाम्ना वकुलादेव्याः आश्रमं प्राप्तवान् । वकुलादेवी कृष्णावतारसमये यशोदा आसीत् ।

पूर्वं कदाचित् गोकुले यशोदा कृष्णम् उक्तवती आसीत्– "कृष्ण ! पुत्रस्य विवाहं द्रष्टुं माता सर्वदा इच्छति इति भवान् प्रायः न जानाति । मम एषा इच्छा अद्यावधि पूर्णा न जाता" इति ।

तदा कृष्णः उक्तवान् "अम्ब ! आगामि-जन्मनि भवत्याः इच्छा सफला भविष्यति" इति ।

अस्मिन् जन्मनि वकुलादेवी श्रीनिवासं पुत्ररूपेण प्राप्य परमानन्दिता जाता । श्रीनिवासः अपि वकुलादेवीं मातृरूपेण प्राप्य सन्तुष्टः।

एकदा श्रीनिवासः वने विहरन् आसीत् । तदा आकाशराजस्य पुत्री पद्मावती वनविहारम् इच्छन्ती, सखीभिः सह तदेव वनम् आगतवती ।

तस्मिन् समये एकः मदगजः घ्रेङ्कारं कुर्वन् तत् वनं प्रविष्टवान् । राजकुमार्याः सख्यः भीताः सुदूरं धावितवत्यः । अस्मिन् कोलाहले राजकुमारी पद्मावती धावन्ती आगत्य श्रीनिवासस्य समीपे स्खलित्वा पतितवती ।

श्रीनिवासः गजस्य आक्रमणं निरुन्धन् गजपद्मावत्योः मध्ये स्थितवान् । तदा मदगजः तत्रैव स्थित्वा शुण्डाम् उन्नीय श्रीनिवासं नमस्कृतवान् । श्रीनिवासः स्वहस्तसाहाय्यं यच्छन् पद्मावतीम् उत्थापितवान् ।

पद्मावती वेदवतीनाम्ना पूर्वजन्मनि विष्णुम् पतिरूपेण प्राप्तुं तपः आचरन्ती आसीत् । रावणस्पर्शात् प्रक्षुब्धा सा योगाग्निं प्रज्वाल्य आत्मानम् आहुतिं दत्तवती आसीत् । अस्मिन् जन्मनि तया आकाशराजस्य पुत्रीभूय पद्मावतीनाम्ना जन्म प्राप्तम् ।

पद्मावती-श्रीनिवासयोः मध्ये परस्परानुरागः समुत्पन्नः। एतं विषयं ज्ञात्वा वकुलादेवी अरुन्धतीसहितैः सप्तर्षिभिः सह आकाशराजस्य प्रासादं गतवती। पद्मावती-श्रीनिवासयोः विवाहस्य प्रस्तावं कृतवती।

इतःपूर्वम् एव श्रीनिवासः भविष्यकथकस्य वेषं धृत्वा पद्मावतीसमीपं गत्वा उक्तवान् आसीत्- 'भवती यं परिणेतुम् इच्छति, तेन सह भवत्याः विवाहः निश्चयेन भविष्यति' इति।

पद्मवतीश्रीनिवासयोः विवाहः सवैभवं सम्पन्नः। 'श्रीनिवासः पद्मावतीं परिणीतवान्' इत्येतां वार्तां नारदः तपसि निरतां लक्ष्मीं निवेदितवान्। एतेन कुपिता लक्ष्मीः आश्रमं प्रस्थितवती।

आगच्छन्तीं लक्ष्मीं दूरतः एव दृष्ट्वा श्रीनिवासः पद्मावतीं तत्र एव त्यक्त्वा सप्तशिखरोपेतं शेषाद्रिम् आरूढवान्। सप्तमं शिखरं प्राप्य लक्ष्म्याः आगमनं प्रतीक्षमाणः तत्र स्थितवान्।

लक्ष्म्याः आगमनसमनन्तरम् एव श्रीनिवासः मन्दहासं प्रकटयन् श्यामशिलारूपेण परिवृत्तः। तस्य विग्रहस्य कण्ठे दिव्या तुलसीदलमाला विराजते स्म। अस्यां मूर्तौ विष्णोः शिवस्य शक्त्याः च अंशाः एकीभूताः। लक्ष्मीः विग्रहस्य वक्षस्थले अन्तर्हिता जाता। अनेकानि दिव्यरूपाणि अपि तत्र समाविष्टानि।

भक्तानाम् अभीष्टं पूरयन् अपेक्षितरूपेण दर्शनं यच्छन् एषः श्रीनिवासः वेङ्कटरमणः वेङ्कटेश्वरः इत्यादिनामभिः अपि ख्यातः। एवं प्रकारेण विष्णुः सप्तगिरेः अधिदेवतारूपेण तत्र स्थापितः अभवत्।

पद्मावती सप्तगिरेः समीपे एव आलुमेलु मङ्गम्मा, नाम्ना विराजमाना वर्तते। लक्ष्मीः यत्र पूर्वं तपः आचरितवती आसीत्, तत्र एव महालक्ष्मीनाम्ना निवासं कृतवती।

भक्तानाम् आपदः क्षणमात्रेण निवारयन्, सम्पदः वर्धयन्, स्मृते सति सद्यः एव प्रत्यक्षीभवन्, वेङ्कटेश्वरनाम्ना विष्णुः शेषाद्रिशिखरे निवसति। "कलियुगस्य देवता" इति जनाः एतं मानयन्ति।





# सेवकपरीक्षा

धनगुप्तः नाम एकः वणिक्। सः कदाचित् अन्यनगरेभ्यः वस्तूनाम् आनयने सहायकं कञ्चित् स्वीकर्तुम् इष्टवान्।

एतां वार्तां सः स्वमित्रस्य समीपे उक्तवान्। सः स्नेहितः, गिरिनाथः अमरनाथः इति नामकं जनद्वयं धनगुप्तस्य समीपं प्रेषितवान्।

उभौ अपि आगत्य आगमनकारणं निवेदितवन्तौ। धनगुप्तः तौ तत्र एव स्थातुम् उक्त्वा अन्तः गतवान्। एकघण्टानन्तरं त्वरया बहिः आगत्य उक्तवान्- "क्षम्यताम, त्वरितकार्यनिमित्तं मया अद्य वीरेन्द्रपुरं गन्तव्यम्। आगमनसमये रात्रिः भवेत्। अतः भवन्तौ श्वः पुनः पश्यामि। भवतोः अन्यतरं कर्मकरत्वेन स्वीकरिष्यामि च" इति।

एवं कथनसमये धनगुप्तः स्ववस्त्रेषु धनस्यूतम् एकं सुदृढं स्थापयितुं प्रयत्नं कुर्वन् आसीत्। एतत् दृष्ट्वा गिरिनाथः उक्तवान्- "महाशय! वीरेन्द्रपुरे चोराणां भीतिः अधिका। निमेषमात्रेण ते चोराः धनं चोरयितुं समर्थाः। एतावति काले अहं चतुर्वारं तैः चोरैः वञ्चितः। अतः एव वदामि— बहु जागरूकता आवश्यकी इति।"

तदा धनगुप्तः पृष्टवान्—" एवं वा? तत्र वसतिव्यवस्था, वसतिगृहेषु अन्नपानादीनां व्यवस्था च कथम् अस्ति? भवान् बहुवारं तत्र गतवान् किल?" इति।

"तत्र वसतिगृहेषु अन्नपानादीनां व्यवस्था सर्वथा अप्रयोजिका। अहं यदा यदा गतवान् तदा सर्वदा ज्वरपीडाम् अनुभूतवान्" इति उक्तवान् गिरिनाथः।

एतदनन्तरं धनगुप्तः अमरनाथं पृष्टवान्— "भवता अपि बहुवारं वीरेन्द्रपुरं गतं स्यात् एव किल? भवतः अनुभवः कः?" इति।

तदा अमरनाथः उक्तवान्— "गिरिनाथस्य

वचनं तु सत्यम् एव । ममापि धनम् एकवारं चोरैः चोरितम् । ततःपरम् अहं जागरूकताम् आश्रितवान् । अतः पुनः कदापि चौर्यं न जातम् ।

आहारविषये अपि तथैव । एकवारम् अहम् अस्वस्थः आसम् । अनन्तरकाले सर्वदा अहं मया सह औषधं नीतवान् । अतः पुनः अस्वास्थ्यस्य प्रसङ्गः एव न आगतः । भवान् अपि भवता सह औषधं नयतु'' इति । सः औषधानां नामानि अपि सूचितवान् ।

धनगुप्तः प्रसन्नतां प्रकटयन् अमरनाथम् उक्तवान्– ''भवान् श्वः आरभ्य कार्यार्थम आगच्छतु ।''

तदा गिरिनाथः कोपेन पृष्टवान्- ''महोदय ! भवतः निर्णयः न्यायसङ्गतः न । पूर्वं तु श्वः आगन्तुम् उक्तवान् आसीत् । इदानीं तु झटिति निर्णयम् उक्तवान् । एतेन सिध्यति यत् भवान् मम बुद्धिमत्ताविषये सन्देहं प्रकटयन् अस्ति इति ।''

एतत् श्रुत्वा धनगुप्तः मन्दं हसन् उक्तवान्- ''अहम् इदानीम् एव निर्णयं किमर्थम् उक्तवान् इति भवान् न जानाति । अतः एवं पृच्छति ।

भवान् चतुर्वारं वीरेन्द्रपुरं गतवान् । तदा सर्वदा चौर्येण भवतः धनं नष्टम् । सर्वदा भवान् अस्वस्थः जातः अपि । एतेन एव स्पष्टं ज्ञायते यत् भवान् धनविषये अजागरूकः । स्वास्थ्यविषये अश्रद्धः इति । प्रथमानुभवेन एव भवान् जागरूकताम् आश्रयितुं शक्नोति स्म, औषधव्यवस्थां कर्तुमपि शक्नोति स्म । उभयम् अपि न कृतवान् । एतेन एव भवतः योग्यता मया ज्ञाता । प्रवासे यः सहायकः भवेत् तादृशः एव मम अपेक्षितः'' इति ।

एतेन गिरिनाथः ज्ञातवान् यत्– ''अमरनाथः एव अधिकं बुद्धिमान् दूरदर्शी च'' इति । अतः सः धनगुप्तं प्रणम्य मौनं ततः निर्गतः ।






# दिव्यौषधम्

कस्मिंश्चित् राज्ये एकः राजा आसीत्। सः महामूर्खः। तस्य मूर्खत्वं समग्रे राज्ये प्रसिद्धम् आसीत्। महाराजस्य पत्नी पत्युः अनुगुणा। तन्नाम सा अपि मूर्खा। एवं तयोः अनुरूपं दाम्पत्यम्!

राज्ञी प्रथमप्रसूत्या एकं स्त्रीशिशुं प्राप्तवती। जन्मसमये शिशोः शिरसि केशाः न आसन्, मुखे दन्ताः न आसन्। एतत् दृष्ट्वा जुगुप्सां प्रकटयन्ती राज्ञी उक्तवती– "हन्त! कीदृशः शिशुः एषः! न केशाः, न दन्ताः!" इति।

तदा राजा उक्तवान्- "कीदृशः अमङ्गलसूचकः शिशुः एषः! यदि सर्वे जनाः एतद्दृशशिशोः वार्तां जानन्ति तर्हि अस्माकं मानस्य का गतिः?" इति।

तदा मन्त्री महाराजं राज्ञीं च समाश्वासयन् उक्तवान्- "भवतोः चिन्ता मास्तु। जन्मसमये सर्वे शिशवः एवम् एव भवन्ति। एषः च प्रकृतिनियमः। यथा यथा वयः वर्धते तथा तथा केशाः वर्धन्ते, दन्ताः उद्भविष्यन्ति च" इति।

"शृणोतु मन्त्रिन्!, अस्माकं मनःसमाधानार्थं किमपि न जल्पतु। शीघ्रम् एव विद्यमानाः सर्वे वैद्याः यथा अत्र आगच्छेयुः तथा व्यवस्थां करोतु" इति राजा आदिष्टवान्।

देशस्य प्रसिद्धवैद्याः सर्वे राजभवने सम्मिलिताः। तान् उद्दिश्य राजा उक्तवान्– "मम एका बालिका अस्ति। सा आकारेण अतीव अल्पा। तस्याः शिरसि केशाः एव न सन्ति। एतत्सर्वं निवारयितुं भवन्तः सर्वे किमपि दिव्यम् औषधं चिन्तयन्तु। सद्यः एव तस्याः मुखे दन्ताः, शिरसि केशाः च यथा उद्भवेयुः, सा च यथा दीर्घा स्यात् तथा करणं भवतां दायित्वम्" इति।

"महाराज! एतत् तु सर्वथा असाध्यम्"

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा।"



इति सर्वे वैद्याः एककण्ठेन उक्तवन्तः ।

"रे शृण्वन्तु ! अहम् अस्य देशस्य चक्रवर्ती आज्ञां कुर्वन् अस्मि । राजाज्ञा कदापि निष्फला न भवेत् । यदि भवन्तः औषधं कर्तुं न शक्ताः तर्हि देशतः भवतां सर्वेषां उच्चाटनं करिष्यामि । तत्पूर्वं एकैकस्य अपि शतं वेत्र-प्रहारान् आदिशामि । पञ्चषनिमेशेषु भवताम् अभिप्रायं सूचयन्तु" इति उक्त्वा राजा ततः गतवान् ।

पञ्चषनिमेशेषु प्रत्यागत्य राजा चिन्तामग्नान् सदैन्यम् उपविष्टान् वैद्यान् पृष्टवान्— "किं निर्णीतम्? पुत्र्याः योग्यव्यवस्थां कुर्वन्ति वा उत वेत्रप्रहारम् अङ्गीकुर्वन्ति वा ?" इति ।

वैद्याः सर्वे मौनम् उपविष्टवन्तः ।

तदा कश्चित् वृद्धः वैद्यः उत्थाय उक्तवान्- "महाराज ! भवान् त्वरां न प्रदर्शयतु ! वयं भवतः आदेशं पालयितुं सिद्धाः स्मः । वयम् एकम् सिद्धौषधं जानीमः । तस्य सेवनेन राजकुमारी शीघ्रमेव वर्धिष्यते । तस्याः मुखे दन्ताः, शिरसि केशाः च उत्पत्स्यन्ते"

"बहु समीचीनम् । तादृशं सिद्धौषधं कुत्र अस्ति !" इति पृष्टवान् राजा ।

वृद्धः वैद्यः उक्तवान्- "इदानीं तत् सिद्धम् न लभ्यते । तस्य सज्जीकरणार्थं कालावकाशः अपेक्षितः"

"कालावकाशः किमर्थम् ? अहम् अस्मि राजा, राजाधिराजः ! चक्रवर्ती ! सम्राट् ! इदानीम् एव तत् औषधम् मम अपेक्षितम् । अल्पे काले तत् औषधं सज्जीकर्तुं न शक्यते वा ?" इति राजा पृष्टवान् ।

वैद्यः सावधानेन उक्तवान्— "भवतः वचनं युक्तम् एव । किन्तु एतस्य औषधस्य निर्माणार्थं सार्धचतुःन्शतं मूलिकाः अपेक्षिताः । तथैव त्रिशताधिकाः धातवः अपि तत्र योजनीयाः ।"

राजा सगर्वम् उक्तवान्— "अस्तु नाम, सर्वाणि वस्तूनि इदानीम् एव आनयन्तु । अद्य एव औषधं सज्जीकुर्वन्तु ।"

"महाराज ! एतत् कार्यं त्वरया न सिध्यति! औषधार्थम् अपयुज्यमानेषु एकं सस्यं चतुर्षु वर्षेषु एकवारं पुष्पितं भविष्यति । एतत्

चतुर्थवारं यदा पुष्पितं भविष्यति तदा एव तस्य मूलम् सङ्ग्रहणीयम्। एवम् एव एकः धातुः केवलं हिमपर्वततः सङ्ग्रहणीयः। किन्तु आश्चर्यस्य विषयः यत् तस्मिन् पर्वते कदाचित् एव हिमवृष्टिः भविष्यति। ततः एषः धातुः खात्वा आनेतव्यः।'' इति उक्तवान् वैद्यः।

''एवम् अपि अस्तु नाम। एकसप्ताहस्य अवधौ औषधं सज्जीकर्तुं शक्येत किल?'' इति राजा पृष्टवान्।

''सप्ताहाभ्यन्तरे किं, वर्षाभ्यन्तरे अपि न शक्यते एव। अतः भवान् एवं करोतु- द्वादशवर्षाणि यावत् पालनपोषणार्थं राजकुमारीं अस्माकं वशे अर्पयतु। अस्मिन् अवधौ वयं राजकुमार्याः कृते योग्यां व्यवस्थाम् औषधोपचारं च करिष्यामः'' इति वृद्धः वैद्यः उक्तवान्।

महाराजः राज्ञीं पृष्टवान्- ''देवि! भवती किम् अभिप्रैति? द्वादशवर्षाणि यावत् पालनपोषणार्थम् पुत्रीम् एतेषां हस्ते दद्मः वा? उत सर्वान् वेत्रप्रहारं दण्डयामः वा?'' इति।

राज्ञी किञ्चित् विचार्य उक्तवती- ''द्वादशवर्षाणां कालावकाशं दत्त्वा एतेषां सामर्थ्यस्य कौशलस्य च परीक्षां करिष्यामः। तावति काले अपि पुत्र्यां परिवर्तनम् आनेतुं एते न शक्ताः चेत् सर्वेषां शिरश्छेदं कारयिष्यामः'' इति।

राजा राज्ञ्याः वचनम् अङ्गीकृतवान्। वैद्यः आत्मना सह राजकुमारीं नीतवान्। द्वादशवर्षात्मके अवधौ राजकुमारीं न केवलं पोषितवान्, योग्यं शिक्षणं दत्त्वा तां समर्थाम् अपि कृतवान्। वैद्यगृहे पालिता राजकुमारी अवधिसमाप्त्यनन्तरं स्वमातापित्रोः समीपम् आगतवती।

इदानीं तस्याः शिरसि कृष्णाः सान्द्राः च केशाः, मुखे विमलाः दन्ताः च विराजन्ते स्म। एतत् दृष्ट्वा सन्तुष्टौ राजा राज्ञी च अपरिमितपुरस्कारेण वैद्यं सम्मानितवन्तौ।

मातापित्रोः मरणानन्तरं राजकुमारी एव महाराज्ञी जाता। कुशलतापूर्वकं राज्यशासनं कुर्वती सा लोकप्रियतां प्राप्तवती।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि।

विजितां शीर्षिकां जनवरि-८५ मासे प्रकटयिष्यामः।





⊛उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवेम्बर-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/ – रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ⊛ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ⊛अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

चन्दमामा (संस्कृतम्)
७३/२ 'अक्षरम्', रङ्गरावूमार्गः, शङ्करपुरम्, बेङ्गलूरु–५६०००४

---

'सप्टम्बर' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः –

प्रथमचित्रम्– युवायमानः विलसति बालः।
द्वितीयचित्रम्– निह्नतकेलौ भाति हि बाला।

प्रेषकः– श्रीमतिसुभद्रा दाश, अभया भवनम्, केन्द्रापडा कटक (ओडिशा)-७५४२११

---

### भवन्तः जानन्ति वा ? ( उत्तराणि )

१. शरावती नद्याः 'जोग' जलपातः। २. हरद्वारं। ३. साबरमती।
४. मध्यप्रदेशः। ५. कलकत्ता।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, . Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| वर्तिका | Wick | विकीर्णवान् | Scattered |
| स्नुषा | Daughter-in-law | आदाय | Having fetched |
| वाटिका | Garden | आदिशत् | Ordered |
| विचारणा | Enquiry | भूरिभोजनम् | Feast |
| शतघ्नी | Cannon | तिन्त्रिणी | Tamarind |
| वृकः | Wolf | प्रतिज्ञातम् | Promised |
| व्याघ्रः | Tiger | अवहेलनम् | Insult |
| पक्षः | Wing | काचकलशः | Jug |
| व्यपगतः | Passed | पिधानम् | Stopper |
| प्रतिपालयति | Awaits | अभेद्यम् | Unbreakable |
| तृणीकृत्य | Having neglected | निरुन्धन् | While preventing |
| प्रभूता | Sufficient | शुण्डा | Task |
| विनियोगः | Utilisation | यच्छन् | While giving |
| वृत्तिः | Profession | दन्तः | Tooth |
| रजकः | Washerman | मूलिका | Root |
| जीर्णः | Worn out | धातुः | Metal |
| भाटकार्थं | For rent | वेत्रः | Cane |
| उषितः | Lived | सान्द्रः | Dense |
| वापी | Well | परिखा | Moat |
| निगूहति | Hides | खानयतु | Have it dug |
| वार्तालापः | Conversation | यन्त्रागारः | Factory |

# शालागमनम्

| Sanskrit | English |
|---|---|
| पुत्री - अम्ब ! पाकः सिद्धः वा ? | Mother, is the food ready ? |
| माता- इदानीं दशनिमेशेषु सिध्यति । | It will be ready in another 10 minutes. |
| पु० – किम्, इदानीम् अपि न सिद्धं वा ? शालां गन्तुं मम विलम्बः भवति । | What, is it not yet ready ? I will be late to school. |
| मा०– कः विलम्बः ? सार्धदशवादने किल भवत्याः शालायाः आरम्भः ? इदानीम् अपि नववादनम् । | What do you mean by saying you will be late ? Doesn't your school commence at 10-30 ? It is only 9 O'clock now. |
| पु० – इदानीं मम सखी मां नेतुम् आगच्छति । | My friend will be coming now to fetch me. |
| मा०– एतावत्शीघ्रं तत्र गत्वा किं करोति ? दशवादने प्रस्थितं चेत् पर्याप्तं किल ? | What will you do there so early ? Won't you be in time if you start at 10 o'clock ? |
| पु० – नैव अम्ब ! अद्य विशेषकक्ष्या अस्ति । अतः पूर्वम् एव गन्तव्यम् । | No, mother. We have a special class today. Therefore we have to go early. |
| मा०– व्याघरणं कृतं चेत् पाकः सिद्धः । तक्रं तु अस्ति एव । भवती भोजनार्थम् आगच्छतु । | Food will be ready if I add the seasoning. There is Buttermilk of course. You may come for food. |
| पु० – इदानीम् अपि क्वथितम् एव न सिद्धम् । भवती केवलं वदति । | The stew is not yet ready ! You merely talk ! |
| मा०– पाकशालां सम्मार्ज्य, स्थालिकाः आसनानि, जलं च स्थापयतु । तावति काले सर्वं सिध्यति । | Sweep the kitchen, lay the plates, place the seats and pour the water. Meanwhile everything will be ready. |
| पु० – अम्ब, तत्सर्वं अनुजां प्रति वदतु । अहम् एकक्षणे वेणीबन्धनं कृत्वा आगच्छामि । | Mother, please tell my sister (younger sister) to do all that. I'll be back in a moment after braiding my hair. |
| मा०– पश्यतु, भवती एव इदानीम् अपि न सिद्धा । पुनः पाकः न सिद्धः इति माम् आक्षिपति । | Look, you are yourself not quite ready. And then you complain that the food has not been prepared yet. |

# साहसमये तथा हासमये आकाशे किम् उड्डयितुम् इच्छन्ति ?



**डाल्टन्**
**सुपर् कामिक्स्**
**प्रतिपक्षं भवतः कृते**
**तम् अवकाशं कल्पयति ।**

मूल्यं केवलं रू. २.५०-एकस्याः प्रतिकृतेः । सुलभतया प्राप्तुं शक्या एषा प्रथमा कामिक्स् पत्रिका अद्वितीया एव ।

अस्याः ३६ वर्णमयपृष्ठानि भवन्तं वीरपुरुषैः सह रहस्यं तथा रोमाञ्चकारिविश्वं नयन्ति ।

सूपर मैन

तथा







डाल्टन् पब्लिकेशन्स्
मद्रास् ६०० ०२६